# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




२२ वर्षे १ अङ्कः

वै० संवत् २०२४

प्रकाशनतिथिः

श्रावणीपूर्णिमा वै० संवत् २०२४

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

**श्रीबलदेव उपाध्यायः, साहित्याचार्यः, एम० ए०**

सहायकसम्पादकः

**मुरलीधरपाण्डेयः**




**२२ वर्षे १ अङ्कः**

# विषयानुक्रमणिका



## ग्रन्थसमालोचनम्



## सम्पादकीयम्



—:०:—

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

२२ वर्षः } ज्येष्ठपूर्णिमा, संवत् २०२४ { १ अङ्कः

# ग्रहाणां मानवजीवने प्रभावः

श्रीअवधविहारीत्रिपाठी, ज्यौतिषविभागाध्यक्षः, वा० सं० वि० वि०, वाराणसी ।

अनन्तब्रह्माण्डविलीनविग्रहान् सतारकान् खेटगणान् प्रदीपयन् ।
प्रचालयन्नध्वनि वीतरोधकें विभासमानः स विभुर्विराजताम् ॥

निर्मलतमायां निशायां वितते व्योम्नि विद्योतमानास्तारका ग्रहाश्च स्वकरनिकरैः स्वरहस्यं ज्ञापयितुमिङ्गितानि विदधन्त इव प्राणिनां विलोचनान्यावर्जयन्ति । सनातन एष क्रमो यावत् प्रचलति प्रचलिष्यति च भविष्यति काले । मानवमनीषा स्वचेतनोत्पत्तिकालत एवैतेषां रहस्यमवगन्तुं विहितप्रयत्ना अभवत् । एषां विषये बहुतरं ज्ञातवती, किन्त्वेतेषां रहस्यानां शृङ्खलासु सदैवाऽधिकाधिकाः कलिकास्तया दृग्गोचरीक्रियन्ते । महर्षयः प्रथमं दृष्टिपथं समागतेषु भासुरभपुञ्जेषु संततं दत्तावधाना एतेषां द्विविधां स्थितिमुपलेभिरे । तत्र कानिचित्तेजोमण्डलान्याकाशे स्वस्थानं परिवर्तयन्ति समालोकितानि कानिचिच्च सुतरां स्थिराणि दृग्गोचरीभूतानि । येषाञ्च स्वाधिष्ठितपदादीषदपि क्षरणं नोपलब्धम्, तेषां नक्षत्रमिति संज्ञां चक्रुः । यानि च गतिमन्त्यासन् तेषां गृह्णन्ति ( नक्षत्राणि ) इति ग्रहा इत्यन्वर्थकमभिधानं विदधुः । एतेषां ज्योतिर्मयपिण्डानां सम्बन्धात्तदवबोधकं शास्त्रमपि ज्योतिषपदव्यपदिष्टमभवत् । अस्य व्युत्पादनन्तु ज्योतिररूत्यस्मिन्निति व्युत्पत्त्या अर्शआद्यचि प्रत्यये ज्योतिषशब्दम्, ज्योतिरधिकृत्य कृतो ग्रन्थ इति विग्रहेणाणि ज्यौतिषशब्दं वा निष्पाद्य क्रियते ।

आकाशे ज्योतिःपुञ्जेषु ये ये पिण्डा यादृशा दृष्टिपथमुपगतास्तत्सम्बन्धिज्ञानं च यादृशं यथाविधमुपलब्धं तदनुसारेणैव तेषां नामधेयान्यपि कल्पितानि । यथा—व्योम्नि सुदूरवर्तिनः

पिण्डविशेषस्य शनैश्चरणाच्छनैश्चर इति, सर्वापेक्षया पिण्डस्य गुरुत्वाद् गुरुरिति, क्षितिसम्बन्धि-सकलगुणानुकारित्वात् क्षितिजः कुज इति, ज्वलदङ्गारक इवाकृतिमत्त्वादङ्गारक इति तस्यैव नाम। अनिशं व्योम्नि सरणात् सूर्य इति। सितेन शुक्लेन भासमानत्वात् सितः शुक्रः सित इति। एवं सर्वान्ते बुद्धत्वाद् बुध इति, चन्द्रमसः कक्षायाः समीपवर्तित्वाच्चन्द्रज इति। मनसश्चन्दनादाह्लादनात् चन्द्र इति। एवं सर्वेषां पिण्डानामर्थानुविधायीन्येव नामान्युपकल्पितानि पुरातनैः। नक्षत्राणां राशीनां नामधेयान्यपि तत्तत्स्थानीयतारापुञ्जाकृतिमनुकृत्य पौराणिक्यः कथा वा समाधृत्य निर्धारितानि। यथा—अश्वमुखसदृशाऽऽकृतिमत्तारापुञ्जोऽश्विनीति व्यपदिष्टः। योनिसदृशाकृतिनक्षत्रसमूहो भरणीति। क्षुरकाकृतिसंस्थानस्तारापुञ्जः कृत्तिकेति। मृगाङ्गनासंस्थानाकृतिमत्तारापुञ्जो रोहिणी ( रोहितमृगी ) इति। रोहिणीमृगशीर्षनक्षत्रे अधिकृत्यैका पौराणिक्याख्यायिका विद्यते, तस्यां हि रोहिणीं स्वसुतामभिधावन्तं मृगशीर्षरूपं ब्रह्माणं मृगव्याधस्वरूपः शङ्करो मृगशिरसि तारकात्रयमयेन बाणेन विव्याध। यथोक्तं शिवमहिम्नस्तोत्रे —

प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममु
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः॥

एवमपरेषां नक्षत्राणां नामान्यपि तत्पुञ्जसंस्थानविशेषात् पौराणिकाख्यानानुसारेण वा विहितानि।

राशीनां नामधेयान्यपि तत्तत्स्थानीयतारकापुञ्जसंस्थानानुगुण्येनैव विहितानि विद्यन्ते। आकाशे यत्र तारासमूहो मेषाकारभृद्दृग्विषयीभूतस्तस्य मेष इति संज्ञा विहिता। एवं वृषभाकृतिसन्निभं तारामण्डलं वृषराशिरिति सङ्केतितम्। यत्र च तारापुञ्जद्वयं मानवमिथुनसंस्थानं भजद् दृष्टं तस्य मिथुनराशिरिति नाम व्यपदिष्टम्। एवं कर्कसिंहकन्यादयो मीनान्ता द्वादशराशयोऽपि स्वस्थानीयतारापुञ्जसंस्थानसादृश्येनैव सङ्केतिता विद्यन्ते।

इमानि नक्षत्राणि राशयश्च त एव ये नभसि सूर्याचन्द्रमसोर्भ्रमणपथसमीपवर्तिनः। सूर्यो वर्षेण, चन्द्रो मासेन चाश्विन्यादि-सप्तविंशतिनक्षत्राणि मेषादिद्वादशराशीन् वा परिक्रामति। एवं सप्तविंशतिनक्षत्राणां द्वादशराश्यात्मकगणनया सपादद्वयनक्षत्रैरेको राशिः सिद्ध्यति। एकस्मिन् राशौ त्रिंशदंशा भवन्ति। एवं राशिचक्रे ३६०° अंशाः सिद्ध्यन्ति। राशेर्नवमो भागः ३°। २०' एको नवमांश इति कथ्यते, एतावानेव नक्षत्रैकपादः पादचतुष्टयेनैकं नक्षत्रमिति। एतेषां

राशिचक्रावयवानां जातके महानुपयोगः । प्रथमम्—केवलं कुतूहलवशेनैवैषां भचक्रीयावयवानां परिचयः पुरातनैर्विहित आसीत्, पश्चाच्च तदनुरोधेनैव प्राणिनां जीवने संघट्यमानानां विपाकानामादेशा अपि कर्तुमारेभिरे । ततो नक्षत्राणां ग्रहाणाञ्च पारस्परिकसंयोगेषु नियमा अपि निर्धारिता अभवन् । तेनेदं ज्यौतिषशास्त्रं सिद्धान्तसंहिताहोराभिस्त्रिभिरवयवैर्विभक्तम् । एषां त्रयाणां लक्षणानि प्रस्तूयन्ते । सिद्धान्तलक्षणं यथोक्तं भास्करेण—

त्रुट्यादिप्रलयान्तकालकलनामानप्रभेदः क्रमात्
चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः ।
भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते
सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः ॥

संहिताहोरालक्षणञ्च वाराहोक्तं यथा—

ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं
तत्कात्स्न्योंपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता ।
.................. ....................
होरान्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः ॥

अत्र होरैव जातकपदवाच्या भवतीति सुप्रसिद्धम् । इदं जातकशास्त्रमेव मानवजीवने ग्रहाणां प्रभावमभिव्यञ्जयति । अत एतदेवाधिकृत्यात्र विमर्शः क्रियते ।

सुविदितमिदं सूक्ष्मेक्षिकावतां यदयं लोकः परमार्थतो वस्तुजातानि केवलं बहिश्चक्षुषैव नावलोकते, किञ्चिच्चिन्मयं नामाभ्यन्तरं चक्षुरपि विद्यते । येन लोकोऽयं समस्तमपि पदार्थजातं यथार्थतः पर्यवेक्षितुं क्षमो भवति, तत्तु परमकारुणिकेन परमेश्वरेण समस्तस्य लोकस्य चेतसि परिमाणतारतम्येन दत्तमेवास्ते । किन्त्वस्माकं पुरातना महर्षयस्तपश्चर्याबलेनैतादृशमुन्नतमकार्षुः, यत्ते भूतान् भविष्यतोऽतीन्द्रियानपि पदार्थान् यथार्थतः प्रत्यक्षीकर्तुं सुतरां प्रभवो बभूवुः । तद्बलेनैव ते लोकानां हितावहान्यैहिकामुष्मिकसुखसाधनीभूतानि विज्ञानरत्नानि लोकोद्दिधीर्षयोपदिदिशुः । तेष्वेकं ज्योतिषविज्ञानात्मभूतं कालविज्ञानमपि । कालो हि सर्वदा नैकविधां स्थितिं भजते । प्रकृत्यैव क्वचिच्छुभावहः, क्वचिदशुभावहः, क्वापि सदोषः, क्वापि सगुणः, क्वापि निर्गुणोऽनादिरनन्तश्चेति । यथाह बृहस्पतिः—

स्वभावादेव कालोऽयं शुभाशुभसमन्वितः ।
अनादिनिधनः सर्वो न निर्दोषो न निर्गुणः ॥

कालेऽस्मिन् शुभाशुभफलाधानक्षमत्वमपि न स्वत एव, किन्तु वियति विद्योतमानानां द्युचरतारकाणां संयोगायत्तमेव । तत्रापि कीदृशे संयोगे कीदृशं शुभमशुभं फलमिति विषयमधि-

कृत्य प्राणिनां जीवने विपाकोपज्ञाननिर्भ्रान्तधीभिर्महर्षिभिरनेकप्रवाहविचारधाराः प्रवाहिताः। तास्तु बहुधोपनिबद्धा जातकसंहितादिपदवाच्या ज्योतिषसमाजे प्रसिद्धाः।

## जातकम्

भारतीयज्योतिषस्य प्राणिनां जीवने सम्बन्धप्रक्रियाया व्यवस्थितिरतितरां मनोरञ्जिका महत्त्वशालिनी च विद्यते। यद्यपि गणितसापेक्षतया विषयस्यास्य गूढत्वन्तु विद्यत एव, सहैव परिभाषानिबद्धत्वेनापि विषयोऽयं विद्वज्जनसम्पर्काद् वञ्चितोऽभवत्। परिभाषा अपहाय यद्यप्यस्य वर्णनमतीव दुर्घटम्, तथापि सरलया सुरभारत्याऽस्य स्वरूपं दिङ्मात्रं विमृश्यते। जातकस्य जन्मकालिकग्रहस्थितिवशेनाऽस्य जीवने सङ्घस्यमानानां सङ्घटिष्य-माणानाञ्च शुभाशुभविपाकानां निर्देशो येन शास्त्रेण क्रियते तज्जातकमिति व्यपदिश्यते। इदानीं प्रश्नोऽयं समुदेति यत्सुदूरवर्तिनि व्योम्नि भ्राम्यन्तो ग्रहपिण्डा भूपृष्ठनिष्ठानां प्राणिनां भाग्यादिकं नियन्त्रयितुं कथं प्रभवन्ति। अपरञ्च यद्यस्माकं पूर्वार्जितानां कर्मणां विपाक एव भाग्यं तदा तस्य नियन्त्रणमेषां ग्रहाणामायत्तं कथङ्कारं भवितुमर्हतीत्यत्र वाराहमिहिरः प्रथम-प्रश्नं समादधदाह लघुजातके—

यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणां पक्तिम्।
व्यञ्जयति शास्त्रमेतत्तमसि द्रव्याणि दीप इव॥

बृहज्जातकेऽपि—

"कर्मार्जितं पूर्वभवे सदा ह यत्तस्य पक्तिं समभिव्यनक्ति।"

अत्रायमाशयः—द्वितीयप्रश्नविषये यवनेश्वरमतं समर्थयन् भट्टोत्पलः कथयति—

"द्विविधं शुभाशुभम्—दृढकर्मोपार्जितमदृढकर्मोपार्जितञ्च। तत्र दृढकर्मोपार्जितस्य दशाफलं पाकक्रमेण व्यनक्ति। अशुभं दशाफलं ज्ञात्वा यात्रादेः परिहारः कर्तव्यः। शुभं ज्ञात्वा यात्रादेरतिशयेन दानम्। अदृढकर्मोपार्जितस्याष्टकवर्गेण फलव्यक्तिः। तच्चाशुभं ज्ञात्वा शान्त्या-दिभिरुपशमं नयेत्। तथा च यवनेश्वरः—

यद्यद्विधानं नियतं प्रजानां ग्रहर्क्षयोगं प्रभवं प्रसूतौ।
भाग्यानि तानीत्यभिशब्दयन्ति वार्तानियोगेति दशा नराणाम्॥
तदप्यभिज्ञैर्द्विविधं निरुक्तं स्थिराख्यमौत्पातिकसंज्ञितञ्च।
कालक्रमाज्जातकनिश्चितं यत् क्रमोपसर्पि स्थिरमुच्यते तत्॥
सप्तग्रहाणां प्रथितानि यानि स्थानानि जन्मप्रभवानि सद्भिः।
तेभ्यः फलं चारग्रहक्रमस्था दधुर्यदौत्पातिकसंज्ञितं तत्॥

अनेन स्थिरस्य शान्त्यादिभिरुपशमः प्रदर्शितो भवति। उक्तं हि भगवता व्यासेन— "विहन्याद्दुर्बलं दैवं पुरुषेण विपश्चिता" इति। इदानीमस्य शास्त्रस्य मानवजीवने ग्रहाणां सम्बन्धेन शुभाशुभसंघटनाद्योतनप्रणाली कीदृशीत्यस्य विवेचनं प्रस्तूयते।

वराहमिहिराचार्येण प्राणिनां जीवनसहानुवर्तिनः कालपुरुषस्याङ्गविभागेन शुभाशुभविपाकपरिणतिर्व्यवस्थापिता। यथा—

कालात्मा दिनकृन्मनस्तु हिमगुः सत्त्वं कुजो ज्ञो वचो
जीवो ज्ञानसुखे सितश्च मदनो दुःखं दिनेशात्मजः।

तत्र ग्रहेषु सूर्यस्य प्रधानत्वात् स एव कालपुरुषस्यात्मा निरूपितः। सूर्यस्य प्रभावः प्राणिनां कृतेऽप्रतिमः। सर्वेषां प्राणिनां जीवनमेव सूर्यायत्तम्। श्रुतिरपि—"सूर्य आत्मा जगतस्तस्थुषश्च" इति। पूर्वं प्रतिपादितं यत् सूर्य एकेन वर्षेण येन मार्गेणाकाश एकं पर्ययं पूरयति तत् क्रान्तिवृत्ताभिधम्। तस्यैव द्वा.शभागा मेषादिराशयो भवन्ति। इमे एव द्वादशराशयो रवि-चन्द्र-भौम-बुध-गुरु-शुक्र-शनि-राहु-केतु नवग्रहाश्च जातकशास्त्रस्य मूलभूतान्युपकरणानि विद्यन्ते। आकाशे प्राच्यामवलोकनेनेदं ज्ञातं भवति यन्मेषादिराशीनां मध्ये कश्चिदेको राशिः पूर्वक्षितिजे सँल्लग्नो भवत्येव। ततः स्वल्पकालानन्तरं स राशिः क्षितिजं परिजहाति, अपरश्च तत्प्रत्यादेशी भवति। अनेनैव विधिना एकस्मिन् दिन इमे द्वादशराशयः पर्यायेण क्षितिजे सँल्लग्ना भवन्ति। एषु यो राशिः क्षितिजे लग्नो भवति स लग्नमिति व्यपदिश्यते। इदमेव लग्नं जातकशास्त्रस्य हृत्स्थानीयमुपकरणम्। अस्माच्छरीरसम्बन्धिविपाका विमृश्यन्ते। अतो हेतोरिदं तनु( शरीरम् )रिति कथ्यते। लग्नादनन्तरा राशयः क्रमतो धन-सुहृत्-सुख-सुत-रिपु-जाया-मृत्यु-धर्म-कर्म-आय-व्ययसंज्ञका द्वादशभावा अभिकीर्त्यन्ते। एष्वेव द्वादशभावेषु प्राणिनां संपूर्णजीवनविपाकाः समाविष्टा भवन्ति। इमे एव द्वादशभावाः कालपुरुषस्य शरीरावयवत्वेनोपकल्पिताः सन्ति। यथाह वराहः—

कालाङ्गानि वराङ्गमाननमुरोहृत्क्रोडवासो भृतो
वस्तिर्व्यञ्जनमूरुजानुयुगले जङ्घे ततोऽङ्घ्रिद्वयम्।
मेषाश्विप्रथमा नवर्क्षचरणाश्चक्रस्थिता राशयः
................ ... . ..... ..... ...... ॥

पूर्वं हि कालात्मा दिनकृदित्यादिषु कालपुरुषस्यात्ममनसोरात्मगुणानाञ्च स्वरूपत्वेन सूर्यादिग्रहाः प्रतिष्ठापिताः। एषां कालपुरुषस्य शरीरावयवानामात्मधर्माणाञ्च सन्नियोगविप्रयोगाभ्यां विविधाः प्राणिनां जीवने फलपरिणतयोऽभिनिवेशिता अभियुक्तैरिति। ते यथावसरं प्रतिपादयिष्यन्ते।

द्वादशभावेसु प्रथमं लग्नं शरीरम्, चतुर्थं सुखम्, सप्तमं जाया, दशमं कर्मेमानि स्थानानि केन्द्रं ( मुख्यम् ) कथ्यन्ते। एषामेव केन्द्राणां पार्श्वद्वये जीवनविषयकाणामपरेषां फलानां परिचायकानि स्थानानि वर्तन्ते। यथा—लग्नस्य ( शरीरस्य ) एकपार्श्वे धनमपरपार्श्वे च व्ययः। सुखस्यैकपार्श्वे बन्धुः पराक्रमश्च, अपरपार्श्वे विद्यापुत्रौ। जायास्थानस्यैकपार्श्वे शत्रुरपरपार्श्वे मृत्युः। एवं कर्मस्थानस्यैकपार्श्वे भाग्यमपरपार्श्वे आयः ( लाभः )। इमाः कल्पनाः प्राणिनां जीवनसम्बन्धेऽतीव चमत्कृतिपूर्णा विद्यन्ते। जातकशास्त्रस्याचार्यैर्भावफलानां तारतम्यविमर्शार्थं ग्रहाणां गृहम्, मैत्री, शात्रवम्, औदासीन्यम्, नीचोच्चस्थानम्, दृष्टिरित्यादीनां कल्पना विहिताः। कस्मिन्नपि भावे प्रतिष्ठितो ग्रहो यदि स्वगृहे स्यात्तदा भावफलमुत्तमम्, मित्रगृहे ततोऽल्पम्, शत्रुगृहे निकृष्टम्, उदासीनगृहे च मध्यमं भवति। एवमेव यदा ग्रहः स्वोच्चस्थाने भवति तदा भावफलमुत्तमम्, नीचे निकृष्टम्, मध्ये तारतम्यपरम्। यो ग्रहो यस्य राशेरधिपतिर्भवति स राशिस्तस्य गृहं भवति। एवमाचार्यैर्ग्रहाणां राशयो निम्नलिखितप्रकारेण वर्णिताः—

मेषवृश्चिकयोर्भौमः शुक्रो वृषतुलाऽधिपः।
बुधः कन्यामिथुनयोः स्वामी कर्कस्य चन्द्रमाः॥
सिंहस्याऽधिपतिः सूर्यः शनिर्मकरकुम्भयोः।
स्यान्मीनधनुषोर्जीवो राशीशाः कल्पिता इमे॥

एषां ग्रहाणामुच्चान्यपि जातकशास्त्रविशारदैः कल्पितानि। यथोक्तं वराहेण वृहज्जातके —

अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः।
दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः॥

अयमाशयो यत् सूर्यस्य परमोच्चांशा मेषे १०° अंशाः, चन्द्रस्य वृषे ३° अंशाः, भौमस्योच्चं मकरे २८° अंशाः बुधस्य कन्यायां १५° अंशाः, गुरोः कर्के ५° अंशाः, शुक्रस्य मीने २७° अंशाः, एवं शनेस्तुलायां २०° अंशाः। एवं स्वोच्चेभ्यः सप्तमराशिषु इम एवांशा नीचपदवाच्या भवन्ति। उच्चं नाम पृथ्वीतो ग्रहस्य परमाधिकदूरत्वम्। अद्यत्वे एषां सूर्यादिग्रहाणामुच्चानां स्थितिरेभ्यः पठितेभ्य उच्चेभ्यो नितरां भिन्ना विद्यते। गणितयुक्त्या सिद्धमिदं यदुच्चस्थानानि स्थिराणि न सन्ति, प्रत्युत आकाशे तेषां स्थितिः सर्वदा परिवृत्तिमाप्नोति। पठितान्युच्चानि कदाचिदेषां ग्रहाणां दूरत्वद्योतकान्यासन्, किन्त्वस्माकं जातकशास्त्रे फलादेशार्थमिमान्येवोच्चानि स्वीकृतानि विद्यन्ते। एषूच्चेषु यदि सूर्यस्योच्चमधिकृत्य वर्तमान-

रव्युच्चेन तदन्तरं विधाय उच्चगतिमनुसृत्य गणितं क्रियेत, तदा जातकशास्त्रे पठितसूर्योच्च-कालो द्वाविंशतिलक्षप्रमितवर्षाणां पुरातनः सिद्ध्यति ।

जातकशास्त्रे ग्रहसम्बन्धिन्योऽपरा अपि कल्पनाः प्राणिनां पारस्परिकसम्बन्धान् जीवने सम्भाव्य परिस्थितीश्चाधारीकृत्यैव विद्यन्ते। आभिः प्रस्तुतीकृताः फलादेशाः प्राणिषु संघट्यमानानां चेष्टानामानुकूल्यमेवावहन्ति । ग्रहाणां स्वाभाविकी मैत्री विरोधस्ताटस्थ्यं तथा तात्कालिक-सौहार्दम्, विद्वेषः, समभावश्चेत्येता मान्यता जातकशास्त्रस्याधारशिलात्वेन परिगृहीताः सन्ति। एवमेव सूर्यादिग्रहाणामात्ममनःशक्ति-वाणी-ज्ञान-काम-दुःखस्वरूपाः संस्थापनास्तथा च मेषादि-द्वादशराशीनां शिरोमुख-वक्षो-हृदय-क्रोड-कटि-वस्ति-लिङ्गोरु-जानु-जङ्घा-चरणस्वरूपाः कल्पना अपि जवानां मानसिकविकासस्य शारीरिकचिह्नादीनां फलादेशेषु व्यक्तीकर्तुमेवोररीकृता विद्यन्ते। ग्रहाणां श्वेतादिवर्णा ब्राह्मणादिजातयः क्रूरसौम्यादिप्रकृतयश्चापि फलादेशेषु देहिनां रूप-वर्ण-जातिमनोवृत्तिप्रभृतीनां परिचयार्थमेव विहिताः सन्ति ।

## दशा

प्राणिनां सम्पूर्णजीवनं भिन्नेषु भिन्नेषु कालेषु पृथक् पृथग् रूपेण प्रभावितं ज्ञापयितुं परिगृहीता शास्त्रेऽस्मिन् ग्रहाणां दशान्तर्दशादयः सन्ति। जीवने कः कालः सुखाधायकः, कश्चारिष्टप्रदो भविष्यति, कस्मिन् काले भाग्योदयो भविता, कदा मातृ-पितृ-बन्धु-स्त्री-सन्तति-प्रभृतीनां सुखादिकं सम्भविष्यति, कस्य ग्रहस्य दशा जीवनं समृद्धिमयं विधास्यति, कस्य च दशायां धनविहीनताऽनुभूयमाना भविष्यति, इतोऽप्यधिकं कदायं संसार एव परित्यक्तो भविष्यतीत्यादि सर्वं विषयजातं ग्रहाणां दशान्तर्दशाभिरेव सूच्यते ।

दशागणनापि ज्योतिषसमाजे प्राधान्येन त्रिधा प्रवर्तते—विंशोत्तरीया, अष्टोत्तरीया, योगिनी चेति। विंशोत्तरीदशायाः प्रमाणम् १२० वर्षमितम्। अष्टोत्तरीदशाप्रमाणम् १०८ वर्षमितम्। योगिन्याः ३६ वर्षाणि। सर्वदशागणनायां जन्मकालिकचन्द्रनक्षत्रस्य प्राधान्यं विद्यते। विंशोत्तरीयदशायां कृत्तिकातो जन्मर्क्षं यावद् गणयित्वा नवभिर्विभज्य शेषैः क्रमतो रवि-चन्द्र-भौम-राहु-गुरु-शनि बुध-केतु-शुक्रग्रहाणां दशा मन्यन्ते। तत्र जन्मकाले जन्मनक्षत्रस्य भुक्त-भोग्य-भोगकालान् संसाध्य ततो गणितयुक्त्या जन्मकालिकग्रहदशाया भुक्तकालो भोग्यकालश्च साध्येते। साधनमिदं ग्रहाणां दशावर्षायत्तम्। तत्र रविदशावर्षमानम् ६, चन्द्रस्य १०, भौमस्य ७, राहोः १८ गुरोः १६, शनेः १९ बुधस्य १७, केतोः ७, शुक्रस्य २० वर्षाणि। उक्तञ्च—

१वाविन्दावारे तमसि च गुरो भानुतनये
बुधे केतौ शुक्रे क्रमत उदिताः पाकशरदः।
रसा आशाः शैला वसुविधुमिता भूपतिमिता
न वेलाः शैलेला नगपरिमिता विंशतिमिताः॥

इदानीं प्रश्नोऽयं समुदेति यज्ज्योतिषे सर्वोऽपि गणनाक्रमोऽश्विनीत आरभ्यते, कथमयं ग्रहदशागणनोपक्रमः कृत्तिकातः क्रियते ? अत्र समाधानमिदं यत् पुरातने काले तैत्तिरीयब्राह्मणे शतपथब्राह्मणे च कृत्तिकात एव नक्षत्रगणनारम्भः स्वीकृत आसीत्। कृत्तिकातो दशागणनयेद-मवसीयते यदस्माकं फलितशास्त्रे ग्रहदशापद्धतिर्वैदिककालत एव जनवर्गं प्रभावयन्ती समा-गच्छति। महर्षिणा गर्गेण पुरातनकाले नक्षत्रगणनापद्धतिर्द्विधा निर्दिष्टा—एका धनिष्ठादिरपरा कृत्तिकादिश्च। तथा च गर्गवाक्यम्—"तेषां सर्वेषां नक्षत्राणां कर्मसु कृत्तिकां प्रथममाचक्षते, श्रविष्ठा तु सङ्ख्यायाः पूर्वा लग्नानाम्" इति। अस्यायमाशयो यत् सर्वेष्वग्न्याधानादिकर्मसु नक्षत्र-गणना कृत्तिकातः क्रियते, किन्तु धनिष्ठा क्षितिजे सँल्लग्नेषु नक्षत्रेषु प्रथमं गण्यते ( तदानीं हि धनिष्ठायामुत्तरायणस्य सद्भावाद्‌तुगणनायां तस्याः प्राथम्यमासीत् )। नक्षत्रगणनायां कृत्तिकायाः प्राथम्यस्य रहस्यमेतद् यत्तदानीं कृत्तिकातारापुञ्जो विषुवद्वृत्ते कृताधिष्ठान आसीत्। तेनोदयकाले स कृत्तिकातारापुञ्जः सर्वत्रैवोदयकाले पूर्वं बिन्दुं भजते स्म। गोलयुक्त्या सिद्ध-मिदं यत्किमपि नक्षत्रं ग्रहो वा विषुवद्वृत्ते भवति, तस्योदयः पूर्वबिन्दावेव भवति। तात्कालिक-कृत्तिकोदयमनुरुद्ध्यैव तैत्तिरीयब्राह्मणे लिखितम्—"मुखं वा एतन्नक्षत्राणां यत्कृत्तिकाः। एता ह वै प्राच्यै दिशो न च्यवन्ते सर्वाणि ह वा नक्षत्राणि प्राच्यै दिशश्च्यवन्ते" इति। कृत्तिकातारा-पुञ्जस्य शरक्रान्तिवृत्तीयस्थानाभ्यामयनगत्या च गणितेनायं समयोऽधुनात एकपञ्चाशत् शती-५१०० वर्षाणां पुरातनः सिद्ध्यति। अतोऽस्माकं जातकशास्त्रस्य ग्रहदशापद्धतिरपीत ईषदून-पुरातनी सिद्ध्यति। गर्गस्यापरोक्तिर्लग्नानां गणना राशिभिरविधाय नक्षत्रैरेव कर्तव्येति सङ्केतयति। वेदाङ्गज्योतिषेऽपि गर्गोक्तिमनुसृत्य लग्नानां गणना नक्षत्रैरेव कृता विद्यते। तथाहि—"श्रविष्ठाभ्यो गुणाभ्यस्तान् प्राग्विलग्नान् विनिर्दिशेत्" इत्यत्र गुणाभ्यस्तानिति पाठे नक्षत्रत्रयस्यैकं लग्नं सिद्ध्यति, गणाभ्यस्तानिति पाठे एकैकस्य नक्षत्रसमूहस्यैकं लग्नमिति कृत्वा सप्तविंशतिलग्नान्यहोरात्रे सिद्ध्यन्ति। वैदिकवाङ्मये ग्रहनक्षत्रयोगेन कालगणनायां सर्वत्रैव नक्षत्राण्येव प्रयुक्तानि विद्यन्ते। महाभारतेऽपि ग्रहाणां स्थितयः स्थले स्थले नक्षत्रेष्वेव सूचिता विद्यन्ते। एतेन पर्यवसीयते यदश्विनीनक्षत्रतो मेषराशितश्च गणनापद्धतिर्भारते बहुकालानन्तरं प्रचलिताऽभवत्।

अष्टोत्तरीयदशायामार्द्रानक्षत्रतो जन्मर्क्षं यावत् सूर्य-चन्द्र-कुज-बुध-शनि-गुरु-राहु-शुक्राणां क्रमतश्चतुष्कं त्रितयमिति पौनःपुन्यक्रमगणनया सूर्य-चन्द्र-कुज-बुध-शनि-गुरु-राहु-शुक्राणां दशा भवन्ति। अत्र रविदशावर्षप्रमाणं ६ वर्षाणि, चन्द्रस्य १५ वर्षाणि, कुजस्य ८, बुधस्य १७, शनेः १०, जीवस्य १६, राहोः १२, शुक्रस्य २१ वर्षाणि स्वीकृतानि वर्तन्ते। यथोक्तं बृहत्पाराशरहोराशाम्—

सूर्यश्चन्द्रः कुजः सौम्यः शनिर्जीवस्तमो भृगुः।
एते दशाधिपाः प्रोक्ता विना केतुं नव ग्रहाः॥
रसाः पञ्चेन्दवो नागाः शैलचन्द्रा नभो भुवः।
गोऽब्जाः सूर्यः कुनेत्राश्च समाः प्रद्योतनादितः॥
अष्टोत्तरीदशा प्रोक्ता शिवाद्या कृत्तिकादितः।
चतुष्कं त्रितयं तस्माच्चतुष्कं त्रितयं पुनः॥
यावत्स्वजन्मभं तावद् गणयेच्च यथाक्रमम्।

अत्र कृत्तिकादितोऽपि दशागणना भवतीति 'शिवाद्या कृत्तिकादितः' इति वचनात् सिद्ध्यति, किन्तु सा विरलप्रचारा एव वर्तते।

योगिनीदशायां चाश्विन्यादितो जन्मर्क्षं यावद् विगणय्य त्रयं संयोज्याष्टाभिर्विभज्य शेषैः क्रमेण मङ्गला, पिङ्गला, धान्या, भ्रामरी, भद्रिका, उल्का, सिद्धा, सङ्कटेत्यष्टौ योगिनीदशा भवन्ति। तासां वर्षप्रमाणं त्वेकत आरभ्यैकाभिवृद्ध्या भवति। यथा—मङ्गलावर्षमानम् १, पिङ्गला २, धान्या ३, भ्रामरी ४, भद्रिका ५, उल्का ६, सिद्धा ७, सङ्कटा ८ इति।

एवं दशाभेदाः काल-गुलिक-निर्याण-शूलादिभेदैर्द्विचत्वारिंशत्सङ्ख्याकाः सन्ति।

## ग्रहदृष्टिः

जन्मकालिकग्रहस्थितिवशतः प्राणिनां जीवनसम्बन्धिफलविपाके ग्रहदृष्टेर्महत्त्वं विशेषेण विद्यते। अस्माकमाचार्यैर्विषयेऽस्मिन् वैज्ञानिकपद्धतिरवलम्बिता विद्यते। पूर्वं तावत्तेषां ग्रहाणां दृष्टिनियमं प्रतिपाद्य पश्चात्तत्र वैज्ञानिकत्वं विवेचयिष्यते। ग्रहदृष्टिक्रमो यथा—

पश्यन्ति सप्तमं सर्वे शनिजीवकुजाः पुनः।
विशेषतश्च त्रिदशत्रिकोणचतुरष्टमान्॥

अस्यायमाशयो यत् स्वाधिष्ठितस्थानात् सप्तमं स्थानं सर्वे ग्रहाः पश्यन्ति, पुनः शनि-जीवभौमाः क्रमेण विशेषतस्त्रि-दश-त्रिकोण-चतुरष्टमान् पश्यन्ति। यथा हि—तृतीयं दशमञ्च

शनिः पूर्णदृष्ट्यावलोकयति, नवमं पञ्चमञ्च गुरुः, चतुर्थमष्टमञ्च भौमः पूर्णदृष्ट्या पश्यति । अत्राऽस्माकं पूर्वाचार्यैरिमाः पूर्णदृष्टयः कथं कल्पिता इति विविच्यते । यथा—स्वस्थानात् सप्तमं जायास्थानं भवति, तत्तु सर्वेषामवश्यं रक्षणीयं भवत्येव । उक्तञ्च—

स्वां प्रसूतिं चरित्रञ्च कुलमात्मानमेव च ।
स्वञ्च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति ॥

तेन सर्वे ग्रहाः सप्तमं पूर्णं पश्यन्ति । एवमेव तृतीयं पराक्रमस्थानम्, दशमं राज्यस्थानम् । शनिर्भृत्यो राज्ञो राज्यरक्षा बलरक्षा च भृत्यस्य मुख्यं कर्म । अतः शनिस्तृतीयं दशमं सप्तमञ्च पूर्णदृशाऽवलोकयति । चतुर्थं सुखस्थानम्, अष्टममरिष्टस्थानं दुर्गस्थानञ्च, भौमस्तु सेनानायकः । राज्ञः सुखरक्षणं दुर्गरक्षणञ्च सेनाधीशस्यावश्यकम् । तेन चतुर्थमष्टमं च भौमः पूर्णदृशा पश्यति । तथा पञ्चमं विद्यास्थानम्, नवमं धर्मस्थानम्, विद्याशिक्षणं धर्मशिक्षणञ्च गुरोर्मुख्यं कर्म, तेन बृहस्पतिर्नवमं पञ्चमञ्च पूर्णदृशा पश्यतीति । एवमिदं सकलदृष्टिनियमो मनोवैज्ञानिकदृष्ट्या राजनीतिकदृष्ट्या च समन्वयमुपेतो विद्यते ।

अस्माकं ज्योतिषशास्त्रे ग्रहाणां दृष्टिभिर्मानवजीवने संघट्यमानाः प्रभावा बहुधोपनिबद्धाः सन्ति । तेषां सर्वेषां वर्णनमत्र कर्तुमशक्यम् । एवं ग्रहाणां दृष्टिसम्बन्धवशेनैव ग्रहयोगेनापि बहूनि शुभाशुभफलानि मनीषिभिर्निर्दिष्टानि । तत्र कीदृशे योगे चतुष्पदानां जन्म, कीदृशे योगे जलचराणाम्, कीदृशे स्थलचराणाम्, कीदृशे चोद्भिज्जानां जनिरिति जातकशास्त्रे बहुधा व्यवस्थापितम्, किन्तु तत्र प्राधान्येन मानवजीवने संघट्यमानानां घटनानां सम्बन्धिनो ग्रहयोगाः समुपदिष्टाः सन्ति । तत्र केचन तन्वादिभावेषु स्थितिवशेनाकृतिसंवादिनः, केचन ग्रहाणामुच्चमित्रादिस्थानस्थितिसंवादिनः । ते च जातकशास्त्रे सङ्कलनेनैकाशीत्युत्तरशतसङ्ख्याकाः ( १८१ ) संभवन्ति ।

एवं मानवानां वार्षिकफलपरकं ताजिकशास्त्रमपि जातकशास्त्राङ्गभूतमेव । अत्र वर्षप्रवेशकालिकलग्नतो भावान् तात्कालिकग्रहांश्च प्रसाध्य भावेषु स्थितैर्ग्रहैर्ग्रहयोगे तात्कालिकग्रहदृष्टिभिः षोडशयोगैः सहमादिभिश्च वर्षाभ्यन्तरे सम्भविष्यन्तः फलविपाकाः कीर्त्यन्ते ।

## संहिता

प्राणिषु ग्रहाणां सार्वभौमशुभाशुभफलं ज्ञापयितुमस्माकं संहिताशास्त्रं प्रवर्तते । अस्य संहिताशास्त्रस्य पर्याप्ता सामग्री वैदिके वाङ्मये समुपलभ्यते । गृह्यसूत्रेषु विवाहादिसंस्काराणां कृतेऽयन-मास-पक्ष-तिथि-चन्द्र-नक्षत्रविषयिण्योऽनेकाः शुभाशुभनिर्देशिकाः पद्धतयो

विद्यन्ते । देवप्रतिष्ठादीनां कालं निर्धारयितुं गुरुशुक्रयोरुदयास्तोत्तरायणादीनामतितरां महत्त्वमङ्गीकृतं विद्यते । श्रौतसूत्रेषु ब्राह्मणेषु चाग्न्याधानयज्ञानुष्ठानादीनां कृते सूर्यचन्द्रयोश्चारवशेन नक्षत्राणि निर्धारितानि विद्यन्ते । इदानीं संहिताशास्त्रस्य फलादेशप्रक्रिया विविच्यते ।

संहिताशास्त्रमनुसृत्य प्राणिनां शुभाशुभविपाकान् विज्ञापयितुं सांवत्सरिकाणामिदमावश्यकं यत्तैः प्राकृतिकघटनानां प्राणिसञ्चेष्टितानां तेषां कायलक्षणानां च सम्यगध्ययनं क्रियेत । सूर्यादिग्रहाणां केन नक्षत्रेण सहोदयेन प्राणिषु कीदृशः प्रभावो निपतति, को ग्रहो वर्णं परिवर्तयति, तस्य प्रकृतिविकृत्योः प्रमाणवर्णयोः किरणप्रकाशयोश्च संस्थानानामुदयास्तयोवक्रत्वमार्गयोर्ग्रहणयुत्योश्च कीदृशः शुभाशुभपरिणामो भवति, चन्द्रबिम्बश्रृङ्गं कस्यां दिशि समुन्नतिं यातीत्यादीनां प्रभावो वस्तूनां समर्घमहर्घताविषये कीदृशो भवति, मेघाः कथं सम्पद्यन्ते, उपलानि (करकाः) कथं निपतन्ति, सन्ध्यारागो भूमिकम्पश्च केन हेतुना जायेते, वृष्टिः कदा भविष्यति ? इत्यादीनां परिज्ञानं सांहितिकस्य कृते नितान्तमावश्यकम् । पुरुषश्च स्त्रियो वा कीदृशं चिह्नं प्रशस्तभाग्याधायकम्, कीदृशञ्च दारिद्र्यसम्पादकम्, केन लक्षणेन नारी राजमहिषीपदमलङ्करोति, पुरुषो वा चक्रवर्तित्वमाप्नोति ? एवं गजाश्वखड्गमणिमाणिक्यरत्नादीनां लक्षणं चामरासवप्रभृतिसमुपभोग्यसामग्रीणां शुभाशुभत्वपरिज्ञानं च संहिताप्रतिपाद्यविषयाः सन्ति । वनस्पतीनां फलपुष्पसंरक्षणं दीर्घजीवितं च कथं संभवेदित्यस्य पूर्णं ज्ञानम्, गृहनिर्माणविधिर्भूमिशोधनं गृहस्वरूपं कस्य कृते कीदृशं शुभमशुभं वा भवतीत्यादीनां लक्षणानां च संहिताशास्त्रेष्वन्तर्भावो भवति ।

अस्माकं मुहूर्तशास्त्रमपि संहिताया एवाङ्गभूतम् । रामायणकालेऽस्य प्रचुरः प्रचारोऽभवत् । महाराजदशरथेन "श्व एव पुष्यो भविता श्वोऽभिषेच्यस्तु मे सुतः" इत्यत्र पुष्यनक्षत्रमधिष्ठितेन चन्द्रमसोपलक्षितः काल एवाभिषेकार्थं शुभमुहूर्तत्वेन सूचितः ।

ज्योतिषस्येदमङ्गमेतावल्लोकप्रियं विद्यते यत् कोऽपि जनो ज्योतिर्विन्निर्दिष्टशुभमुहूर्तमन्तरेण किमपि कार्यं न करोति । इदमपि तथ्यमेव यत् संसारे प्रत्येकं कार्यस्य कृते शास्त्रेणानेन विधिनिषेधौ प्रस्तुतीकृतावेव विद्येते । अस्य बीजमप्यस्माकं वैदिकवाङ्मय एव विद्यते । इदमस्माकं पूर्वपुरुषाणां कालपरीक्षणमनीषायाः शुभाशुभनिरीक्षणशक्तेश्च जाज्वल्यमानं प्रमाणं विद्यते । भारतीयानां राज्ञां कृते न केवलं कर्मसामान्यानां शुभाशुभमुहूर्तज्ञापनार्थमेव ज्यौतिषकोऽपेक्षित आसीत्, प्रत्युत इतोऽप्यधिकं युद्धेषु जयपराजयोर्निर्देशार्थं दैवज्ञः परं प्रयोजनीयोऽभवत् । तदर्थं हि सेनापतीनामरिष्टनिर्देशो गजतुरगाणां तात्कालिकचेष्टितेन

युद्धे जयपराजयसङ्केतनं च दैवज्ञैरेव कर्तुं पार्यते स्म। परस्परं युद्धयतोर्नराधिपयोर्नामाक्षर-स्वरैरपि ग्रहस्वरचक्रनिर्माणद्वारा जयपराजययोर्निर्देशः कृतो विद्यते स्वरशास्त्रे। केचिज्ज्योतिर्विदः प्राणिनां हस्तपादादिरेखाचिह्नानि च निरीक्ष्यैव लग्नं ग्रहाणां स्थितिं च निश्चिन्वन्ति। तादृशा ज्योतिर्विदोऽधुनाऽपि भारते विद्यन्ते। अमेरिकादेशवास्तव्येन केरो ( Chero )—नामकेन सामुद्रिकग्रन्थस्य प्रस्तावनायामिदमुदलेखि यत् 'गढ़वाल'प्रदेशे एतादृशाः पर्वतीया विद्वांसो मया साक्षात्कृता ये हस्तरेखाभिर्जन्मकुण्डल्यां लग्नस्य ग्रहाणां च स्पष्टां स्थितिं गणितेनानयन्ति स्म। विषयोऽयं भारतेऽधुना विरलप्रचार एव विद्यते। भारतीयफलितज्योतिषस्यैकैकं विषयमवलम्ब्य विशिष्टा ग्रन्थाः सम्पादिता वर्तन्ते। अस्मिन् स्वल्पकाये निबन्धे तेषां सर्वेषां विषयाणां समावेशः कर्तुं न पार्यते, अतो मया तेषामनुक्रममात्रं प्रदर्शितम् ॥



# व्याकरणस्वरूपम्

श्रीकालिकाप्रसादशुक्लः, अनुसन्धानसंस्थानम्, वा० सं० वि० वि०, वाराणसी ।

गीर्वाणगवीमधिकृत्य शास्त्रशैल्या यावान् विपुलो निर्दोषो व्यवस्थाविशिष्टो दृढः प्रौढो हृदयङ्गमो वैज्ञानिकश्च विमर्शोऽस्मिन् भरतभूवलये समजनि, न तावतो विमर्शस्य सौभाग्यमञ्चति देशान्तराणि । संस्कृतसरस्वत्याः श्रेणिविभाजनम्—प्रकृतिप्रत्ययप्रकल्पनम्, धातुप्रत्ययवाच्यनिश्चयनम्; व्यपेक्षैकार्थीभावपक्षव्यवस्थापनम्, उत्सर्गापवादचिन्तनम्, पदार्थानामन्योन्यं संसर्गस्थापनम्, प्रकृत्यर्थप्रत्ययार्थसम्बन्धविवेचनम्, शाब्दबोधसामग्रीनिभालनम्, पदानां वाक्यानां च मूलभूतशब्दस्फोटगवेषणम्; किं बहुना, निखिलस्यापि चराचरात्मकस्य जगतः शब्दकारणतादर्शनं भारतीयसंस्कृतशाब्दिकशार्दूलानां बुद्धिवैभवस्य परां काष्ठां निर्दिशति ।

कियन्तो नामार्थाः, के च ते, कतमस्य च ज्यायस्त्वम्, नञर्थः कः, निपातानां वाचकत्वं द्योतकत्वं वा, लकाराणां क्व शक्तिः, समासे विशिष्टा शक्तिः, आहोस्वित् पदशक्त्यैव निर्वाहः, शक्तिश्च बोधजनकतारूपा वाच्यवाचकभावापरपर्यायरूपा, धातोः फलावच्छिन्नव्यापारे शक्तिः, फले व्यापारे च पृथक् शक्तिः, आख्यातस्थले व्यापारमुख्यविशेष्यकः शाब्दबोधः, तत्रापि कर्तृप्रत्ययस्थले व्यापारमुख्यविशेष्यकः, कर्मप्रत्ययस्थले च फलमुख्यविशेष्यकः शाब्दबोधः, कृत्प्रत्ययस्थले आश्रयविशेष्यकः, के विभक्तीनामर्थाः, काश्च कारकविभक्तयः, काश्च तद्भिन्नाः; निखिलस्यापि ब्रह्माण्डस्य कारणीभूतस्य स्फोटस्य भेदप्रभेदा इत्येतेषां शब्दविषयकाणां विचारचातुरी परमरमणीया स्वयंवरवधूर्भारतीयानेव संस्कृतशब्दानुशासनविदो वृतवती, नान्यान् देशान्तरीयानिति नाविदितं विदितवेदितव्यानां तत्रभवतां मेधासमेधितस्वान्तानां सुमनसाम् ।

अस्यैव भरतभूभागस्य सौभाग्यमेतद् यच्छताब्दीर्यावत्; शरदः शतानि तपांसि तप्त्वा, विधूतविविधकल्मषा अमलमानसा अप्रतिमप्रतिभाः शाब्दिकशार्दूलाः शब्दविद्यावगमाय विज्ञानसरणीसमन्वितानि तानि तानि शब्दशास्त्राणि निरमासिषुः, येन भारतस्य गौरवमद्याप्यमरायते, तिरस्कुरुते चान्यभाषाशास्त्रविदां विदुषां यशांसि । अमीषां शब्दशास्त्राणां सामर्थ्येनैव संस्कृतभाषा परामभरतां प्राप्नोति, आत्मनो लोकभाषात्वं सर्वभाषाश्रेष्ठत्वञ्च न विजहाति । व्यवस्थितस्य शब्दानुशासनशास्त्रस्य दारिद्र्यादनेका भाषा विलयमिता दुरवगमार्थतां वा प्राप्तुं विवशा अभू-

वन्। नेमां दशां संस्कृतसरस्वती समन्वभूत्, प्रत्युत संस्कृतभाषा शाब्दिकानां करुणावरुणालयानामनिर्वचनीययाऽनुकम्पया परप्रहारशतानि सोढ्वापि जीवन्ती सती सुतरां सुगमतां समैति। किं बहुना, एतच्छब्दशास्त्रमन्तरा आधुनिकभाषाशास्त्रं निकामं विकलमासीदिति वैदेशिकैरपि विद्वद्भिस्तत्रास्यातीवोपयोगः कृतः।

इदञ्च व्याकरणशास्त्रं ज्योतिषामपि ज्योतिः, यतो हि शब्दो ज्योतिः, तस्य प्रकाशनम् = अन्वाख्यानम्, प्रकृतिप्रत्ययतदर्थप्रतिपादनं व्याकरणमेव करोति। तथा चोक्तम्—

इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥

शब्दशास्त्रं समधिगम्य स्वाशयं प्रकाशयद्भिर्भर्तृहरिपादैः प्रतिपादितम्—

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः॥

(वा० प० १।१६)

पदमञ्जरीकारा हरदत्तमिश्रा अप्यवोचन् शब्दानुशासनप्रस्तावे—

उपासनीयं यत्नेन शास्त्रं व्याकरणं महत्।
प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम्॥
रूपान्तरेण ते देवा विचरन्ति महीतले।
ये व्याकरणसंस्कारपवित्रितमुखा नराः॥

(पृ० १४, का० वृ०)

चिकित्साऽध्यात्मादिशास्त्रवद् व्याकरणशास्त्रमपि जनानामत्यन्तायोपकारकम्। समर्थितमेतद् भर्तृहरिणा—

कायवाग्बुद्धिविषया ये मलाः समवस्थिताः।
चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः॥

(वा० प० १।१४७)

व्याकरणमभिनन्दन् भगवान् शेषावतारोऽप्याह—

"सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः, सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति, मातापितरौ चास्य स्वर्गे लोके महीयेते" (अ० १, पा० १, आ० २, पृ० १२६-१२७)।

एवंविधस्य शासनतः श्रेष्ठस्य गुणतो गरिष्ठस्य दुर्मेधसो दविष्ठस्य मुख्यवेदाङ्गत्वेन प्राप्तप्रतिष्ठस्य शब्दानुशासनस्य सम्प्रति स्वरूपं श्रीमतां समक्षं समुपस्थाप्यते। शब्दसाधुत्वप्रतिपादनपरेषु तेषु तेष्वाकरग्रन्थेषु सम्यक् समीक्ष्यमाणेषु शब्दानुशासनस्य स्वरूपद्वयं समुपलभ्यते। एकं लौकिकशब्दव्युत्पादकम्, अपरं परमार्थवस्तुप्रतिपादकम्। "पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणमिदम्" इत्यादिनाऽऽद्यं निर्दिष्टम्, "इयं सा मोक्षमाणानाम्" इत्यादिनाऽन्त्यञ्च। अन्त्यमग्रे निरूपयिष्यते। सम्प्रति प्रथमं व्युत्पाद्यन्ते = प्रकृतिप्रत्ययविभागकल्पनया प्रदर्श्यन्ते शब्दा येनेति व्युत्पत्तिगम्यं स्वरूपं निरूप्यते।

व्याकरणत्वं च 'अर्थविशिष्टशब्दनिष्ठपुण्यजनकतावच्छेदकसाधुत्वजातिविशेषव्यञ्जकत्वम्'। अर्थविशिष्टेत्यनेन यस्य यदर्थबोधकत्वं तदर्थविशिष्टस्यैव तस्य साधुत्वं सूचितम्। अर्थविशेषनियन्त्रितसाधुत्वस्य स्वीकारेण दन्त्यसकारघटितस्य 'अस्व'शब्दस्य तुरङ्गमार्थेऽसाधुत्वेऽपि निर्धनेऽर्थे साधुत्वमव्याहतमेव। समवायेन पुण्यविशेषं प्रति स्वाभिव्यञ्जककण्ठाद्यभिघातादिजनककृतिमत्त्वेन साधुशब्दः कारणम्। तथा च समवायसम्बन्धावच्छिन्नपुण्यविशेषत्वावच्छिन्नकार्यतानिरूपितस्वाभिव्यञ्जककण्ठाद्यभिघातजनककृतिमत्त्वसम्बन्धावच्छिन्नव्याकरणबोधितशिष्ट—प्रयुक्तशब्दनिष्ठकारणतावच्छेदकत्वेन साधुत्वजातिः सिद्ध्यति। अत्र शिष्टप्रयुक्तत्वं च साक्षात् परम्परया वा। एवं च शिष्टैः साक्षादुच्चारितानां व्याकरणव्युत्पाद्यानामनुकरणानां बाहुलकादिना बोधितानां च संग्रहः। शब्दनिष्ठः पुण्यजनकतावच्छेदको धर्मो जातिविशेषः साधुत्वम्, अपभ्रंशनिष्ठः पापजनकतावच्छेदको धर्मविशेषोऽसाधुत्वम्। कत्वादिना साङ्कर्यं तु साधुत्वजातेर्बाधकं न भवति, ययोर्धर्मयोर्लोके वैयधिकरण्यं प्रसिद्धम्, तयोरेव साङ्कर्यस्य जातित्वबाधकत्वम्, साधुत्वकत्वादिधर्मयोस्तु 'करोत्यादिशब्दघटकः ककारः साधुः' इति व्यवहारस्यापि दर्शनेन सामानाधिकरण्यस्य सर्वसम्मतत्वात्।

अयं भावः—इतिहासपर्यालोचनेनेदं पर्याप्तमवगन्तुं शक्यते यज्जनैः कामं प्रयुज्यमाना पुनः पुनर्व्यवह्रियमाणा काचन वाग् यदा जनभाषात्वमाप्नोति, विस्तरञ्चैति, भाषान्तरसम्पर्कात् साङ्कर्यदोषमादधाति, तदा तस्याः स्वरूपनिर्धारणाय सीमानियमनाय च प्रयतमाना विद्वांसः कांश्चन नियमान् निबध्नन्ति। त एव नियमा व्याकरणपदेन व्यपदिश्यन्ते। दृश्यते चेदानीं परिपाटीयं भोजपुरीहिन्दीगुजरातीप्रभृतीनां देशीभाषाणाम्। तात्पर्यमिदमस्ति यत् शब्दानां सिद्धानामेव लघुनोपायेन ज्ञानं साध्यते व्याकरणेन, न तु नवीनाः शब्दा निष्पाद्यन्ते।

संस्कृतभाषाया व्याकरणस्याप्ययमेव धर्मः। व्याकरणाध्ययनमन्तरैव जना भाषामवगच्छन्ति, प्रयुञ्जन्ति चेत्यस्य निदर्शनं स्वमातृभाषाप्रयोग एव। व्याकरणशास्त्रस्येतिहासविदो

विदन्त्येव यद् यदा व्याकरणशास्त्रं नात्मलाभं लभमानमासीत्, नापि तस्याध्ययनपरिपाटी प्रसृताऽऽसीत्, तदानीमपि जनाः, येषां संस्कृतभाषा व्यवहारभाषाऽऽसीत्, विनापि व्याकरण-नियमावगमम्, विनापि भूधातोस्तिप्रत्यये गुणेऽवादेशे च भवतीत्यस्य निष्पत्तिर्भवतीति बोधं भवतीति प्रयुञ्जाना आसन्। एवं व्याकरणाभावयुगेऽपि 'गच्छति'-'शक्नोति'-इत्यादयः प्रयोगाः प्रयुज्यमाना आसन्, वेदाश्चाधीयमाना आसन्, यदा प्रकृतिप्रत्ययविचार एव न प्रादुर्भूत आसीत् न च गणभेदेनैकस्य धातो रूपभेदो भवतोति समीक्षैव समुदिताऽऽसीत्।

भाषाज्ञानार्थं व्याकरणमावश्यकं नास्तीति व्याकरणप्रयोजननिरूपणावसरे "वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः। अनर्थकमिदं व्याकरणम् "(महाभा० १।१।१, पृ० ३१) इति भाष्योद्धृतवचनेन स्पष्टं भवति। व्यवहारे लोकाः प्रतिपदं शब्दानुशासनस्य निखिलान् नियमानविकलं नानुसरन्ति, प्रत्युत वैपरीत्यमाचरन्ति। अस्य साक्ष्यं भाष्यं स्वयमेव समुपस्थापयति—"अजेर्व्यघञपोः" (२, ४, ५६) इति सूत्रे वैयाकरणरथकारसंवादप्रसङ्गेन। तथा हि—एवं हि कश्चिद् वैयाकरण आह—कोऽस्य रथस्य प्रवेता' इति। सूत आह—'अहमायुष्मन्! अस्य रथस्य प्राजिता' इति। वैयाकरण आह— अपशब्दः' इति! सूत आह—'प्राप्तिज्ञो देवानांप्रियः, न तु इष्टिज्ञः [ प्रयोगज्ञाता ] इष्यत एतद् रूपमिति'। वैयाकरण आह—'अहो खल्वेतेन दुरुतेन बाध्यामहे' इति। सूत आह---'न खलु वेञः सूतः, सुवतेरेव सूतः। यदि सुवतेः कुत्सा प्रयोक्तव्या दुःसूतेनेति वक्तव्यम्'। नियमनिगडितान् शब्दान् कदाचिद् न प्रयुञ्जन्तीत्यस्यापि निदर्शनम्, नहि वचिरन्तिपरः प्रयुज्यते, बहुवचनपर इत्यन्ये, झिपर इत्यपरे' इत्यादीनि प्रचुराणि वचनानि तत्र तत्र भाष्ये समुपलभ्यन्ते। लोकानां व्याकरणस्य नियमानामुपेक्षणम्, विपर्यासः, न्यूनता च 'बाहुलकात्, निपातनात्, आकृतिगणत्वात्, आप्तवचनात् सिद्ध्यति' इत्यादिशब्दैः शास्त्रकारैस्तत्र तत्र प्रदर्श्यते।

अत्रेदं तत्त्वम्—भाषासरितायाः प्रवाहः शनैः शनैः पुरो धावति, ते ते नवा नवाः शब्दाः प्रवाहे पतन्ति, येषां सिद्धिप्रकारः शास्त्रकृद्भिर्न प्रदर्शितोऽस्ति, तदर्थं निपातनाद्युपायाः प्रदर्श्यन्ते। त एवोपायाः सूचयन्ति यद् भाषा सर्वथा व्याकरणं नानुसरति, अपि तु व्याकरणमेव भाषामनुसरति। अत एव पाणिनिसूत्रैः सर्वतोभावेन सर्वेषां संस्कृतशब्दानां सिद्धावसम्पन्नायां कात्यायनवार्त्तिकानि भाष्येष्टयश्च प्रायः क्रमेण वर्षशतकद्वयमतीत्यात्मलाभमलभन्त। एवं गच्छता कालेन भाषान्तरसंपर्काद् देशान्तरसंपर्कात् प्रवाहे प्रपततां 'कालीन-

पुङ्क्षु-अक्रामि-प्रभृतीनां पदानां सिषाधयिषा 'मुग्धबोध-सारस्वत-हेमशब्दानुशासनप्रभृतीनां शब्दशास्त्राणामाविर्भावनया देशममुं स्पृहणीयगुरुतायाः परां काष्ठां प्रापितवती।

कवयस्तु—"छन्दसि लिट्" ( ३, २, १०५ ), "लिटः कानज्वा" ( ३, २, १०६ ), "क्वसुश्च" ( ३, २, १०७ ) इति भूतसामान्ये छन्दसि लिट्, तस्य विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतमुपेक्ष्य 'तं तस्थिवांसं नगरोपकण्ठे' इति प्रयुञ्जाना आत्मनो निरङ्कुशत्वा-सह्यकलङ्कपङ्कं क्षालयितुं नापारयन्। "कित्करणसामर्थ्याद् भाषायामपि क्वसुकानचौ भवतः" इति समादधानाः केचन वैयाकरणाभासाः सूत्रकृता छन्दसीति प्रक्रान्तत्वादुत्तरसूत्रे भाषाग्रहणाच्च भाष्यवार्त्तिकयोरपि क्वसुकानचोः 'छन्दस्युभयथा' इति वचनात् सार्वधातुकत्वेन 'सार्व-धातुकमपित्' इति ङित्त्वादेव आजिवानित्यादौ कित्कार्याणां नलोपादीनामन्यथासिद्धिमाशङ्क्य तीतिर्वान्, तिस्तिराण इत्यादौ "ऋच्छत्यृताम्" (७, ४, ११) इति प्राप्तस्य गुणस्य बाधनार्थं कित्करणमिति सिद्धान्तं प्रदर्शयद्भ्यां हरदत्तमिश्रमाधवाभ्यां भर्त्सिताः।

"जनिकर्तुः प्रकृतिः" ( १, ४, ३० ), "तत्प्रयोजको हेतुश्च" ( १, ४, ५५ ) इत्यत्र षष्ठीसमासनिषेधकं "तृजकाभ्यां कर्तरि" ( २, २, १५ ) इति स्वकृतमपि नियममनिर्वाहयन् भगवान् पाणिनिः, पाणिनीयव्याकरणेऽगाधां श्रद्धामादधत् 'उपलब्धौ यत्नः क्रियताम्' इत्यत्र 'उपलभा' इत्यस्य स्थाने 'उपलब्धि'पदं प्रयुञ्जानः पतञ्जलिरपि स्पष्टीकरोति यल्लोको व्यवहारे व्याकरणस्य दासत्वं नाङ्गीकरोति। किं बहुना, लिङ्गानुशासनस्य प्रत्याख्याने "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति व्याहरता भगवता व्याकरणापेक्षयाऽपि लोकानामधिकं प्रामाण्यं लिङ्गविषयेऽभ्युपगतम्। अन्यत्राप्यनेकत्र शब्दानुशासनसिद्धान्तैरनिष्पत्तिदशायाम्—"सिद्धमेतत्, कथम्? लोकात्" इति लोकानां साध्यमभ्युद्धृतम्।

अत एव शब्दानुशासनस्वरूपप्ररूपणप्रस्तावे भाष्ये आशङ्कितम्—शब्दानां तदर्थानां तेषां सम्बन्धानां च सिद्धत्वात् तद्व्युत्पादनपरं व्याकरणमिदं निष्प्रयोजनम् "सिद्धे शब्दार्थ-सम्बन्धे" इत्यनेन। अत्र सिद्धशब्दो नित्यपर्याय इत्यपि महताडम्बरेण तत्रैव भाष्ये समर्थितम्।

इदमत्राकूतम्—जातिस्फोटलक्षणस्य व्यक्तिस्फोटलक्षणस्य वा शब्दस्य नित्यत्वेन, कार्यशब्दिकानां मतेऽपि प्रवाहनित्यत्वेन, जातिलक्षणस्यार्थस्यापि नित्यत्वेन, द्रव्यपक्षेऽपि सर्वशब्दानामसत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं वाच्यमिति नित्यत्वेन प्रवाहनित्यत्वेन वा [ अत्रा-सत्योपाधिः=जातिरूपः। जातिर्ह्यद्वैतिनां मते आविद्यको धर्मविशेषः। अथवा, सर्वेषां धर्माणां ब्रह्मण्यध्यस्तत्वेन शुक्तिरजतादिज्ञाने शुक्त्यादीनां विशेष्यत्ववत् सर्वत्राधिष्ठानभूतं ब्रह्मैव विशेष्यम्, विशेष्यमेव च द्रव्यम् ]; शब्दार्थयोरनित्यत्वपक्षे च तयोरिव सम्बन्धस्यापि शक्तिरूपस्य

तादात्म्यस्य व्यवहारपरम्परयाऽनादित्वान्नित्यत्वेनापूर्वशब्दनिष्पादनद्वाराऽर्थविशेषसम्बन्धनिष्पादकत्वं सिद्धशब्दार्थसम्बन्धबोधकत्वं वा व्याकरणशास्त्रस्य स्वरूपं सम्भवितुं नार्हति।

अग्रे च लोकव्यवहारोपष्टम्भेन शब्दार्थसम्बन्धानां नित्यत्वं साधितं भगवता। अनित्येषु वस्तुषु लोकैरन्यथा व्यवह्रियते नित्येषु चान्यथा। शब्दश्च व्यवहारोऽनादिवृद्धव्यवहारपरम्पराव्युत्पत्तिपूर्वकः। अतः शब्दादीनां व्याकरणेन निष्पाद्यत्वं न सम्भवति। घटादयश्च जलाहरणादिकार्यार्थिभिः कुलालकुलादितः समानीयन्ते, उत्पादविनाशयुक्ताश्चोपलभ्यन्ते। शब्दाश्च घटादय इव नैव शाब्दिककुलादानीयन्ते, न चोत्पादविनाशयुक्ता वोपलभ्यन्ते। एवञ्च व्याकरणानिष्पाद्यत्वरूपं जन्यभावव्यवहारविजातीयव्यवहारविषयत्वेन जन्यभाववैजात्यरूपं वा नित्यत्वमनुमीयते शब्दानाम्।

तथा च भाष्यम्—"कथं पुनर्ज्ञायते—सिद्धः शब्दोऽर्थः सम्बन्धश्चेति ? 'लोकतः' [ वा० ] यल्लोकेऽर्थमर्थमुपादाय शब्दान् प्रयुञ्जते, नैषां निर्वृत्तौ यत्नं कुर्वन्ति। ये पुनः कार्या भावाः, निर्वृत्तौ तावत्तेषां यत्नः क्रियते। तद्यथा—घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाह - कुरु घटं कार्यमनेन करिष्यामीति। न तद्वच्छब्दान् प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाह—कुरु शब्दान् प्रयोक्ष्य इति। तावत्येवार्थमुपादाय शब्दान् प्रयुञ्जते" ( १, १, १ आ० पृ० ४५ )। "तावत्येवार्थमित्यस्य बुद्धया वस्तु निरूप्येत्यर्थः इति कैयटः, 'वैयाकरणकुलमगत्वेत्यर्थः' इति नागेशः।

अन्यत्राप्यन्योन्याश्रयदोषं परिहरता—"परिहृतमेतत्, कथम् ? शब्दानां नित्यत्वात्। एतेन सर्वेऽप्यन्योन्याश्रयदोषाः परिहृताः" इति भगवतोक्तम्। एतेनेत्यस्य शब्दानां नित्यत्वेनेत्यर्थ इति कैयटः। अतोऽपि व्याकरणस्य नूतनशब्दानिष्पादकत्वं सुतरां सिद्ध्यति।

एवं शब्दानुशासनशास्त्रनिर्माणरीतिनिरूपणाधिकरणे 'शब्दानुशासनमिदानीं कर्तव्यम्, तत्कथं कर्तव्यम्, किं शब्दोपदेशः कर्तव्यः, आहोस्विद् अपशब्दोपदेशः, आहोस्विद् उभयोपदेश इति" इत्यत्र शब्दोपदेशशब्देन मन्त्रवत् सिद्धानां शब्दानामुपदेशः सूचितः, न तु निष्पाद्यानामिति। किं बहुना, अपशब्दोपदेशेन सिद्धानामेवापशब्दानामप्युपदेशः, न त्वसिद्धानाम् ; तथा सत्युपदेशपदस्वारस्यभङ्गः स्यात्।

व्याकरणेन शब्दानामन्वाख्यानं क्रियते। अन्वाख्यानं नाम शब्दसंस्कारः। तच्चान्वाख्यानं त्रिविधम्—क्रमिकम्, पदावधिकम्, वाक्यावधिकञ्चेति। तत्र प्रयोगीयवर्णोच्चारणक्रमानुरोधेन संस्काररूपमाद्यम्। तस्य च स्वाभाविकत्वान्न तत्र किमपि प्रमाणान्तरमपेक्ष्यते।

यत्र च पदं वाक्यं वोच्चार्यैककालावच्छेदेन घटकानां वर्णानां संस्कारः सम्पाद्यते, तत्र पदावधिकं वाक्यावधिकञ्चान्वाख्यानमाख्यायते। अयञ्च द्वितीयः पक्षो विप्रतिषेधसूत्रेऽन्तरङ्गपरिभाषोदाहरणप्रदर्शनप्रसङ्गे "वैक्ष्यमाणिः, सौत्थितिः, वृद्धिश्च प्राप्नोत्येकादेशश्च, परत्वाद् वृद्धिः स्यात्, एकादेशो भवत्यन्तरङ्गतः" इति भाष्योक्तिपर्यालोचनेन पदावधिकान्वाख्यानं विना वृद्ध्येकादेशयोर्युगपत्प्राप्तेर्वक्तुमशक्यत्वेन ध्वन्यते। वाक्यावधिकेऽन्वाख्याने "अस्ति पुनः किञ्चिद् भावसाधनस्य विधिशब्दस्योपादाने सतीष्टं संगृहीतम्, आहोस्विद् दोषान्तरमेवेति। अस्तीत्याह—इह 'कानि सन्ति', 'यानि सन्ति', 'कौ स्तः', 'यौ स्तः' योऽसौ पदान्तो यकारो वकारो वा श्रूयेत, स न श्रूयते" इति "न पदान्त०" (१, १, ५८) सूत्रस्थं भाष्यमेव प्रमाणम्। अन्यथा वाक्यान्वाख्यानाभावे पूर्वत्वेन दृष्टस्य कार्याभावात् स्थानिवत्त्वाप्राप्त्या तदसङ्गतमेव स्यात्।

अत्र पदं वाक्यं वोच्चार्य व्याकरणेनान्वाख्यानं भवतीत्यत्र भाष्यप्रामाण्यप्रदर्शनेन पदानि वाक्यानि च सर्वाणि सिद्धान्येवेति न किञ्चिद् व्याकरणस्येतिकर्तव्यतां पश्यामः।

अर्थबोधजनकताशक्तिः साधुष्वेव नासाधुष्वित्यपि व्याकरणस्य प्रतिपाद्यं नास्ति। यतो हि शक्तिग्राहकेषु व्याकरणादिषु श्रेष्ठस्य व्यवहारस्योभयत्रापि समानत्वमस्ति। अर्थबुबोधयिषया शब्दानां प्रयोगात्, अर्थश्चोभयतः समानभावेन बुद्ध्यते। यद्यपि व्यवहारदर्शनस्य शक्तिग्राहकत्वं न सम्भवति, जन्मकाले तद्बोधकशब्दाभावात्, शक्तिग्रहाभावे इष्टसाधनत्वाभावेन बालानां पयःपाने प्रवृत्तिर्न स्यादिति वक्तुं शक्यते; तथापि जन्मान्तरीयव्यवहारदर्शनं स्वसंस्कारद्वारा शक्तिस्मारकं भवति। संस्कारोद्बोधकञ्च जीवनादृष्टमेवेति कल्प्यते। पूर्वजन्मानुभूतशक्तिस्मरणादेव बालानां तिरश्चां च बोधो भवति। पश्वादीनामपि स्वजात्यनुसारेणैव प्रतिनियता काचित् प्रतिभा दृश्यते, अतस्तेषामप्यनादिवासनयैव तद्ग्रहो लक्ष्यते।

अत्र व्युत्पन्नानामपभ्रंशेन साधुशब्दस्मरणात्, अव्युत्पन्नानाञ्चापभ्रंशेन शक्तिभ्रमाद् बोधसिद्धेर्नापभ्रंशेषु शक्तिः स्वीकर्तव्येति तार्किकतर्कः समुज्जृम्भते। अत्रेदं प्रतिविधानम्—अपभ्रंशशब्दसमकालमेव झटित्यर्थबोधो भवति, नहि तेन साधुशब्दस्मरणमनुभूयत इत्यनुभवप्रामाण्यादपभ्रंशेषु शक्तिरवश्यं स्वीकर्तव्या। अन्यथा तद्वाचकसाधुशब्दाज्ञानवतां बोधो नोदयमासादयेत्। "उच्चार्यमाणः शब्दः सम्प्रत्यायको भवति, न संप्रतीयमानः" (म० भा० १।१।६८) इति भाष्यादपभ्रंशेन स्मृतात् साधुशब्दाच्च बोधो न स्यात्।

अव्युत्पन्नानाम् 'असाधुशब्दे शक्तिरस्ति' इति शक्तिभ्रमाद् बोधो भवति। अन्यप्रकारत्वेन ज्ञातस्यैव तदभाववत्तत्प्रकारकज्ञानरूपभ्रमसम्भवेन पामराणां शक्तिप्रकारकघटादिसाधुपद-

विशेष्यकज्ञानाभावेन 'घड़ा'इत्याद्यपभ्रंशशब्दे तद्भ्रमो नोपपद्यत इति शङ्का तु यस्य 'घटपदं घटत्वावच्छिन्ननिरूपितशक्तिमत्' इत्याकारको बोधो विद्यते, तस्य यथाकथञ्चित् 'घड़ा'पदं 'घटत्वावच्छिन्ननिरूपितशक्तिमत्' इति भ्रमो जातः, पश्चाच्च 'घड़ा'पदं घटत्वावच्छिन्ने शक्तमिति पामराणां ज्ञानपरम्परा जातेति प्राथमिकज्ञानगतभ्रमत्वमादायैव साजात्यादुत्तरोत्तरस्मिन् भ्रमत्व-व्यवहारेणापासनीया—इत्यापातरमणीयमेव प्रतिभाति। यतो हि—तद्वत्ताज्ञानं प्रति तदभाव-वत्तानिश्चयस्य प्रतिबन्धकत्वेन 'घड़ा' इत्यादिपदे घटत्वरूपानुपूर्व्यभाववत्तानिश्चयस्य सत्त्वेन शक्तता-वच्छेदकानुपूर्वीमत्त्वज्ञानस्यैव शक्तिभ्रमत्वनिश्चायकत्वाद् घड़ादिपदे शक्तिभ्रमस्यानुपपत्ति-स्तदवस्थैव स्यात्। सकलदेशशिष्टैः सर्वेऽपभ्रंशा न परिगृह्यन्ते, संस्कृतशब्दास्तु परिगृह्यन्त इति लाघवात् संस्कृतशब्देष्वेव शक्तिरस्ति, अपभ्रंशानां तु शक्तिभ्रमाद् बोध इत्यपि न प्रमाण-कोटिमाटीकते, कम्बोजदेशे शवधातुर्गत्यर्थे, विकारे (मृतके) अर्थे त्वार्यदेशे प्रयुज्यते। एवमेव 'हम्म' 'रंह' इत्यादिधातवोऽपि सुराष्ट्रादिदेशनियता एवेति सकलदेशशिष्टपरिगृहीत-तत्वस्य संस्कृतेऽप्यभावात्। तथा च भाष्यम्—"एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते। तद्यथा—शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एनमार्या भाषन्ते 'शव' इति। हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते, दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु" (म० भा० प० आ०)। वाचकस्य व्यञ्जकत्वे आलङ्कारिकाणां प्राकृतभाषोदाहरणस्यासङ्गत्याप्यपभ्रंशे शक्तिः सिद्ध्यति। अपभ्रंशानां शक्तत्वादेव केनचित् साधुशब्दे समुच्चारिते स्त्रीशूद्रबालानामर्थसंशये शक्तत्वेनोक्तसंस्कृत-शब्दाज्ञानात् तदपभ्रंशेन निर्णयो भवति।

आर्यम्लेच्छाधिकरणेनापशब्दानामशक्तत्वं न प्रतिपाद्यते, किन्तु वेदार्थनिर्णये तेषामेव तदधिकारित्वाद् वैदिकशब्दार्थसन्देहे यं शब्दं यत्रार्थे आर्याः प्रयुञ्जते तेन शब्देन तदर्थं एव ग्राह्य इति निर्णीयते। "तत्र हि—यद्यपि आर्या यवशब्दं दीर्घशूके प्रयुञ्जते, तमेव च बुध्यन्ते, म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते, तमेव च बुध्यन्ते; तथाप्यार्यप्रसिद्धेर्बलवत्त्वाद् वेदे दीर्घशूकपर-तैवेति सिद्धान्तितम्। तत्र हि 'शवतिर्गतिकर्मा' इत्याद्युक्तभाष्याद् द्वयोरपि शक्तिग्रहाद् बोधे-नोभयत्रापि साधुत्वेन शक्तत्वेन च तृतीयस्य सन्देहे विकल्पबोधे वा आर्यप्रसिद्धेर्बलवत्त्वाद् वेदे तद्बोध एवोचित इति। एवञ्चानार्यैरपि यज्ञे दीर्घशूका एवोपादेया अयज्ञे त्वनार्यैः प्रियङ्गव एवोपादेया इति विशेषः" इति नागेशः (वै० सि० ल० म०, श० नि०, पृ० ६०)।

न्यायभाष्यकारोऽपि "आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा, साक्षात्करणमर्थस्याप्तिः, तया प्रवर्तत इत्याप्तः, ऋष्यार्यम्लेच्छानां समान

लक्षणम् । तथा च सर्वेषां व्यवहाराः प्रवर्तन्त इति । एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते, नातोऽन्यथेति" ( न्या० सू० १, १ ७ ) इति प्रतिपादयन्नपभ्रंशे स्पष्टं शक्तिं स्वीकृतवान् ।

सूत्रकृतापि "सामयिकः शब्दादर्थप्रत्ययः"( वै०सू०७,२,२० ) इति सूत्रेण शब्दजन्योऽर्थविषयको बोधः सामयिकः=संकेतकृतः' इत्यर्थकेन; शब्दशब्देन शब्दापशब्दयोरुभयोरपि ग्रहणादुभयोरपि शक्तत्वं सूचितम् ।

यदि वेदार्थस्य सामयिकत्वं न सम्भवति, वेदवाक्यस्य व्यावहारिकवाक्यभिन्नत्वेनार्थेनाज्ञातसम्बन्धत्वात् तत्कल्पने संकेतापातात् सापेक्षप्रामाण्यापत्तिरापतेदिति विभाव्यते; तदपि न, लोकवेदयोरर्थभेदाभावाद् वेदवाक्यस्यापि लौकिकव्युत्पत्तिमूलकतया संकेतान्यानपेक्षतयाऽनपेक्षमेव प्रामाण्यमित्यस्य वक्तव्यत्वात् ।

अथापभ्रंशे शक्तिः स्वीक्रियते, तर्हि च्युतसंस्कृतेर्दोषत्वबीजस्य शाब्दबोधाजनकत्वरूपस्याभावात् काव्ये च्युतसंस्कृतेर्दोषत्वं न स्यात् । तल्लक्षणं तु काव्यप्रदीपकृता—"यद्भाषासंस्कारकव्याकरणलक्षणविरुद्धं यत्, तत् तद्भाषायां च्युतसंस्कृतीत्यर्थः" इत्युक्तम् । उदाहरणं तु—"गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः' ( कि०१७।६३ ) । अत्र "आङो यमहनः" ( पा० सू० १,३ २८ ) "स्वाङ्गकर्मकाच्च" इत्यनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्यैवात्मनेपदं नियमितम्, तदुल्लङ्घितमिति व्याकरणलक्षणहीनत्वाच्च्युतसंस्कारत्वम्" ( सा० द० ७, ४ ) इति । तदपि न, काव्ये च्युतसंस्कृतिदोषस्य दूषकताबीजं शाब्दबोधाजनकत्वं नास्ति, किन्तु साधुपदसमुदायमध्येऽसाधुपददर्शनेन विप्रसभायां चाण्डालदर्शनेनेव सहृदयोद्वेग एवेति ।

अपभ्रंशस्य शक्तत्वादेव "एवमिहापि समानायामर्थावगतौ शब्देन चापशब्देन च, तत्र धर्मनियमः क्रियते—शब्देनैवार्थोऽभिधेयो नापशब्देनेति । एवं क्रियमाणमभ्युदयकारि भवतीति" इति भाष्यं सङ्गच्छते ।

एतेन "अर्थाय ह्येते उच्यन्ते शब्दाः, न धर्माय" इति शबरस्वामिनोक्तं पराहतम् । "तदशक्तिश्चानुरूपत्वात्" ( मी० द० १,३,२८ ) इत्यस्य जैमिनिसूत्रस्याप्ययमर्थो यत्—अपभ्रंशा अपि साधवः, तेऽपि साधयन्त्यर्थमिति पूर्वपक्षे; "अन्यायश्चानेकशब्दत्वम्" ( मी० द० १,३,२६ ) इति केचिदेव साधवः, न सर्वं इति मनसि निधाय, तर्हि साधौ प्रयोक्तव्येऽसाधूच्चारणं कथम् ? इत्याशङ्क्य "शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्" (मी० द० १,३,२५)

इति सूत्रेण प्रयत्नसाध्ये कार्ये प्रमादस्य दर्शनात्, "यथा शुष्के पतिष्यामीति कर्दमे पतति, तथा साधौ प्रयोक्तव्येऽसाधोः प्रयोगः" ।

एवञ्चैतावता प्रबन्धेनेदं प्रतिपादितं भवति यत् संस्कृतशब्दा अपि सिद्धाः; तेषामर्थाः, शक्तिः, लिङ्गानि च सिद्धानि सन्ति, लोकतश्च ज्ञातानि भवन्ति। एवमपभ्रंशानामपि विषये बोद्धव्यम्। एवं सिद्धे सति शब्दानुशासनस्य साध्वसाधुशब्दविवेकज्ञानपूर्वकं साधुशब्दप्रयोगे धर्मः, व्याकरणव्युत्पादिताश्च शब्दाः साधवः, अन्येऽसाधव इत्यत्र तात्पर्यमध्यवस्यति।

अत एव व्याकरणस्य साक्षात् परम्परया च प्रयोजनप्रतिपादनप्रसङ्गे रक्षोहागमलघ्व-सन्देहानां साक्षात् प्रयोजनत्वं भाष्ये प्रतिपादितम्। लोके 'अदुहत'-'जहार'-इत्यादावदृष्टान् लोपागमवर्णविकारान् 'अदुह'-'जभार'-इत्यादौ वेदे दृष्ट्वाऽशाब्दिको भ्रमेण पाठान्तरं कल्पयेत्। दृढतरभ्रंशशङ्कयाऽऽचार्येष्वविश्वासात् तेषां वचनाद् भ्रमनिवृत्तिस्तु दुर्लभैव। शाब्दिकस्तु न व्यामुह्येत्, वेदार्थञ्चाध्यवस्येत्। एवञ्च वेदार्थज्ञानपूर्वकं शुद्धतत्तन्मन्त्रैस्तद्विहितकर्मानुष्ठानेन स्वर्गसुखम्, उपनिषदर्थज्ञानेन वा मोक्षश्च पुरुषार्थौ व्याकरणाध्ययनस्य फलमिति वेदरक्षकत्वं व्याकरणमिति सिद्ध्यति।

यस्मिन् यागे इतिकर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा प्रकृतिः। येनोपजीव्यते सा विकृतिः। प्रकृतिवद्विकृतिः कर्तव्येति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग् विजानाति। तत्राग्नेर्मन्त्रोऽस्ति—अग्नये त्वा जुष्टं निर्वपामीति। तत्र "सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः" इति सौर्ये चरौ मन्त्र ऊह्यते—सूर्याय त्वा जुष्टं निर्वपामीति।" यद्यप्यूहे न मन्त्रत्वम्, तथाप्येकदेशस्योहेऽनेकपदसमुदाये मन्त्रत्वप्रत्यभिज्ञानात्तद्घटिते समुदाये मन्त्रत्वव्यवहारः कर्मणः साङ्गत्वञ्चेति बोध्यम्। ऊहज्ञस्य ह्यार्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा ऐहिकसुखसिद्धिः फलमित्यैहिकसुखप्राप्तिकर्तृत्वमपि व्याकरणस्य सिद्ध्यति।

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति श्रुत्या व्याकरणाध्ययनस्य नित्यकर्मत्वं प्रतिपाद्यते। "प्रधानं च षट्सु अङ्गेषु व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति।" [ व्याकरणाध्ययनस्यागमः खल्वपि प्रयोजनः = प्रवर्तकः। अत्र करणसाधनेन प्रयोजनशब्देन आगमस्य सामानाधिकरण्यम्। भाष्यस्थप्रयोजनपदेन फलं प्रयोजकश्चोच्यते ]। अत्र फलपदेन वाक्यार्थावगमो विवक्षितः, व्याकरणशास्त्रं च पदपदार्थावगमद्वारा वाक्यार्था-वगमोपयोगि। एवं च व्याकरणानध्ययनप्रयुक्तस्य वेदार्थाज्ञानप्रयुक्तस्य च प्रत्यवायस्य परिहारक-तयाऽस्य नित्यकर्मत्वमित्यर्थः।

यैः किल वेदे आस्था नाधीयते, तेषामपि लघुनोपायेन शब्दज्ञानार्थं व्याकरणमावश्यकम्, शब्दानां प्रतिपदपाठः शब्दज्ञानेऽनभ्युपाय एव। तथा हि भाष्यम्—"एवं हि श्रूयते—'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम'। बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालः, न चान्तं जगाम" इत्यादि। एवं चाल्पायासेन शब्दौघज्ञानजनकत्वं व्याकरणत्वं सिद्धम्।

असन्देहपरिपालकत्वमपि व्याकरणस्य स्वरूपं भाष्यादवगम्यते। तथा हि—"याज्ञिकाः पठन्ति—'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इति। तस्यां सन्देहः—स्थूला चासौ पृषती च, स्थूलानि वा पृषन्ति यस्याः सा स्थूलपृषतीति। तां नावैयाकरणः स्वरतोऽध्यवस्यति, यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथान्तोदात्तत्वं ततस्तत्पुरुष इति।" अत्रासन्देहः = सन्देहाभावः, स च नात्यन्ताभावः, तस्य नित्यत्वात्, न चापि ध्वंसः, तत्तद्विषयकव्याकरणज्ञानवतः सन्देहस्यैवाभावेन तदसम्भवात्, नहि वैयाकरणस्य संशय उत्पद्य विनश्यति, इतरस्यैव तदुत्पादात्। यस्य त्वधीतव्याकरणस्यापि क्वचित् सन्देहः, स तद्विषयकवैयाकरणत्वाभाववानेव, वेदनार्थे हि तत्र प्रत्ययविधानात्। अतोऽत्रासन्देहपदेन सन्देहप्रागभावो विवक्षितः।

एतत्सर्वं व्याकरणस्य तटस्थलक्षणं प्रतिपाद्य 'सूत्रं व्याकरणम्' इति तस्य स्वरूपलक्षणेऽनेका अनुपपत्तीः प्रदर्श्य 'लक्ष्यलक्षणे व्याकरणम्' इति वार्त्तिकव्याख्यानावसरे "लक्ष्यं च लक्षणं चैतत्समुदितं व्याकरणं भवति। शब्दो लक्ष्यः, सूत्रं लक्षणम्" इति भगवता भाष्यकारेण सिद्धान्तितम्। अत्र व्याकरणशब्दो योगरूढ्या लक्ष्यलक्षणसमुदायपरः। अस्मिन् पक्षे करणत्वं समुदायस्यापि। अत एव शब्दानां प्रतिपत्तिर्भवति। समुदायावयवयोर्वैयाकरणानां मते भेदेन व्याकरणस्य सूत्रमित्यत्र षष्ठ्यर्थोपपत्तिर्वृक्षस्य शाखेतिवत्। भवे तद्धिते नास्ति सन्देहः। प्रोक्ततद्धितोऽपि समुदायस्यानन्यत्वान्नेतुं शक्य इति नास्ति कश्चित् सन्देहः।

एतावता प्रबन्धेन शब्दसाधुत्वलक्षणं शब्दशास्त्रस्य स्वरूपं निरूप्य सम्प्रति प्राक् संकेतितं दार्शनिकं स्वरूपं निरूपयितुमुपक्रम्यते—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ( बृ० २, ४, ५ ), "य आत्माऽपहतपाप्मा, सोऽन्वेष्टव्यः, स विजिज्ञासितव्यः" ( छा० ८,७,१ ), "आत्मेत्येवोपासीत" ( बृ० १,४,७ ), "आत्मानमेव लोकमुपासीत" ( बृ० १,४,१५ ), "ब्रह्म वेद ब्रह्मैव भवति" ( मु० ३,२,९ ) इत्यादिश्रुतिभिः प्रत्यगात्मसाक्षात्कारस्यैव परमपुरुषार्थमोक्षसाधनत्वं समर्थितम्। तादृशसाक्षात्कारसाधकानि वेदान्तादीन्येव

शास्त्राणि दर्शनशास्त्रपदव्यपदेश्यानि भवितुमर्हन्ति, न तु पदसाधुत्वासाधुत्वसाधनेन शब्दसाक्षात्कारसाधकं शब्दशास्त्रं दर्शनशास्त्रपदव्यपदेश्यतामादधीत ।

अत्रेदं तात्पर्यम्—यद्यप्याकरग्रन्थेषु दर्शनशब्दप्रवृत्तिनिमित्तमधिकृत्य शास्त्रीयपद्धत्या न क्वचनापि कश्चनापि विचारलेशो निभाल्यते; तथापि येषु शास्त्रपदवाच्येषु किं वस्तु, क आत्मा, किं तत्स्वरूपम्, कानि च तत्साधकानि प्रमाणानि, को मोक्षः ? इत्यादयोऽध्यात्मविषयाः प्राधान्येन प्रतिपादिताः स्युः, प्रसङ्गोपात्तानां लौकिकानामपि विषयाणां विवेचनतात्पर्यं यदि तत्रैव पर्यवस्येत्, तान्येव दर्शनशास्त्रपदव्यपदेश्यतां समुपयान्तीति पण्डितमण्डलीषु प्रवहन्ती काचन परम्परा पर्यालोच्यते । नैवम्भूतं व्याकरणशास्त्रम्, केवलमत्र पदसाधुत्वासाधुत्वाख्यानमेव विजयतेतमामिति कथङ्कारमस्य दर्शनशास्त्रत्वमिति संशीतिः कदाचिद् विदुषामपि मनांसि समुद्वेजयेदित्यत्र व्याकरणाकरग्रन्थेषु निगूढानि प्रस्थानग्रन्थेषु प्रपञ्चितानि च दर्शनतत्त्वानि संक्षेपतः प्रदर्श्य दार्शनिकं व्याकरणस्वरूपं प्रदर्शयिष्यते ।

तपःस्वाध्यायसततनिरतैर्विगतकल्मषैः समाधिसमाहितस्वान्तैॠषिभिः स्वेन स्वेनार्षेण चक्षुषा स्वे स्वे निर्विकल्पके समाधौ सम्प्रति समुपलभ्यमानानां चेतनाचेतनभेदेन द्वैविध्यमाप्तानां पदार्थानां ग्राह्यग्राहकसर्वाकाररहितमपरिच्छिन्नं सर्वतः संहृतक्रमं यन्मूलतत्त्वं दृष्टमनुसंहितं च, यच्च तत्तन्मतानुयायिनां सर्वेषां प्राणिनां परमपुरुषार्थसाधनतयाऽभीप्सिततमम्, तदेव दर्शनम् । तत्प्रतिपादकानि शास्त्राण्यपि दर्शनाभिधानानि, 'शिष्यतेऽनुशिष्यतेऽपूर्वोऽर्थो बोध्यतेऽनेन, दृश्यते बोध्यतेऽपूर्वोऽर्थोऽनेन' इति विग्रहाभ्यां दर्शनशास्त्रपदयोः पर्यायवाचकत्वात् । एवं च दार्शनिकान्तरैरिव शाब्दिकशार्दूलैरपि शब्दतत्त्वं मूलतत्त्वरूपेण समाधौ साक्षात्कृतम्, तस्यैव च प्रत्यगात्मस्वरूपत्वेन व्याकरणस्याप्यध्यात्मज्ञानोपायभूतत्वाद् दर्शनशास्त्रत्वे न विप्रतिपद्येरन् मात्सर्यविधुरा विद्वांसः ।

अत्रेदमाकूतम्—"सदेव सोमेदमग्र आसीदेकमेवाद्वितीयम्, ब्रह्मैवेदं सर्वम्, आत्मैवेदं सर्वम्" इत्यादिभिः श्रुतिभिर्जगत्कारणस्य सत्यत्वमेकत्वं ब्रह्मत्वमात्मत्वं च यथा प्रतिपाद्यते, तथा "वागेवार्थं पश्यति वाग् ब्रवीति वागेवार्थं निहितं सन्तनोति । वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते ॥", "ओमित्येतदक्षरमिदं सर्वम्, ओमिति ब्रह्म" इत्यादिश्रुतिभिः शब्दरूपतापि प्रतिपाद्यत इति शब्दब्रह्मैव जगत्कारणम् । "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुत्याऽस्य स्वप्रकाशकत्वमपि प्रतिपाद्यते । हेलाराजोऽपि (?) "इह त्रीणि ज्योतींषि त्रयः प्रकाशाः स्वरूपपररूपयोरवद्योतकाः । तद्यथा—'योऽयं जातवेदाः, यश्च पुरुषेष्वान्तरः प्रकाशः, यश्च प्रकाशाप्रकाशयोः प्रकाशयिता शब्दाख्यः प्रकाशः,

तन्नैतत् सर्वमुपनिबद्धं यावत् स्थास्नु चरिष्णु च"। अभियुक्तोक्त्याऽनया शब्दतत्त्वस्य स्वप्रकाशकत्वं समर्थितवान्।

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते पृथगिव स्थिते॥

(वा० १।५५)

इति प्रतिपादयन् हरिरप्यत्र परमानुकूलतां भजते। यथा तेजसः=प्रदीपादेर्ग्राह्यत्वं ज्ञानविषयत्वम्, ग्राहकत्वं घटादिविषयकज्ञानजनकत्वं चेति द्वे ग्राह्यत्वग्राहकत्वरूपे शक्ती स्तः, तथैव सर्वशब्दानामेते ग्राह्यत्वग्राहकत्वशक्ती, शक्तिशक्तिमतोरभेदात्; नित्यात्मभूते अपि भिन्ने इव स्थिते प्रतिभासमाने स्त इत्यर्थः। शब्दः स्वं प्रकाशयन्नेवार्थं प्रकाशयतीति कारिकाया निर्गलितोऽर्थः।

एतदेव शब्दतत्त्वं केनोपनिषदा "अन्यदेव तद्विदितादथो अविदितादधि" (केनो० १।३) इत्यनेनात्मनो ब्रह्मत्वे प्रतिपादिते कथं न्वात्मा ब्रह्म ? आत्मा नामाधिकृतः कर्मण्युपासने च। संसारी कर्मोपासनं वा साधनमनुष्ठाय ब्रह्मादिदेवान् स्वर्गं वाऽऽसादयितुमिच्छति। तस्मादन्य उपास्यो विष्णुरीश्वर इन्द्रश्च प्राणो वा ब्रह्म भवितुमर्हति, न त्वात्मा, लोकप्रत्ययविरोधात्। तार्किका अपि ईश्वरादन्यमात्मानमाचक्षते। मीमांसकाश्च 'अमुं यजामुं यज' इत्यन्या एव देवता उपासते। तस्माद्युक्तं यद्विदितमुपास्यं तद् ब्रह्म भवेत्, ततोऽन्य उपासक इत्यस्या विप्रतिपत्तेर्विपातनाय सिद्धान्तितया यच्चैतन्यमात्रसत्ताकमक्रमं शब्दतत्त्वं वाचा सक्रमया वर्णपदवाक्यरूपया नाभ्युद्यते, येन चाक्रमेण शब्दतत्त्वेन सक्रमा वागभ्युद्यते तद् ब्रह्म। इदं यदनात्मभूतमुपाधिभेदविशिष्टमीश्वराद्युपास्यते 'तन्न ब्रह्मेति विद्धि' इत्यर्थिकया "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥" (केनोपनिषद् १।४) अनया श्रुत्या ब्रह्मपदेन प्रतिपादितम्।

'यः स्फोटम्=स्फोटाभिव्यञ्जकं ध्वनिं शृणोति, सुषुप्तौ इन्द्रियगणे विलीनेऽपि, शून्यम्=अज्ञानं पश्यतीति शून्यदृक्, सुप्तोत्थितस्य 'न किञ्चिदवेदिषम्' इति स्मरणं तदानीमज्ञानानुभवं साधयति, येनाक्रमेण प्रणवेन वाग् व्यज्यते, 'यस्य चात्मनः सकाशाद् हृदयाकाशे प्रत्यक्षम्, स परमात्मा' इत्यर्थकेन—

शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक्।
येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः॥

अनेन भागवतेनापि परमात्मपदेन तदेव वस्तु समर्थितम् ।

भगवती गीताऽपि—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" ( १८।६१ ) इत्यनेन ईश्वरपदेन तदेव तत्त्वं प्रतिपादयति । तथा चोक्तं नागेशभट्टेन—"चतुर्विधा हि वागस्ति—परा, पश्यन्ती, मध्यमा, वैखरी च । तत्र मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते । नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता ( हृदयदेशे शब्दब्रह्मरूपा ) मनोगोचरीभूता पश्यन्ती वागुच्यते । एतद्द्वयं ( परारूपं पश्यन्तीरूपञ्च ) वाग्ब्रह्म योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते । ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते" ( परमल० मं०, स्फोटविचारः, पृ० ६८–६९ ) इति । एवं च व्यासनागेशयोरैक्यं स्पष्टमेव ।

सर्वग्राह्यग्राहकाकारवर्जिता अपरिच्छिन्ना सर्वतः संहृतक्रमा ब्रह्मापरपर्याया पश्यन्तीवाग् अविद्यालक्षणया अन्तःपश्यदवस्थया भोक्तृतारूपया विशिष्टं ज्ञेयरूपशून्यं चैतन्यमात्रं जीव इत्यभिधीयते । अनुमोदितश्चायमर्थो भागवतेन—

स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥

( ११।१२।१७ )

स एषः=अपरोक्षः, जीवयतीति जीवः=परमेश्वरः, अपरोक्षत्वे हेतुः—विवरेषु= आधारादिचक्रेषु प्रसूतिरिव, प्रसूतिरभिव्यक्तिर्यस्य सः, तामेवाभिव्यक्तिमाह–घोषेणेति । घोषेण पराख्येन नादवता प्राणेन सह, गुहामाधारचक्रं प्रविष्टः सन्, मनोमयं सूक्ष्मं रूपं पश्यन्त्याख्यं मध्यमाख्यं च मणिपूरचक्रे विशुद्धिचक्रे च उपेत्य=प्राप्य, वक्त्रे मात्रा=ह्रस्वादिः, स्वरः= उदात्तादिः, वर्णः=अकारादिः, इत्येवं वैखर्याख्यः स्थविष्ठः=अतिस्थूलो नाना वेदशाखात्मको भवति । तथा च श्रुतिः—

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

निगमरूपोऽयं मन्त्रोऽनेकधा मुनिभिराचार्यैश्च व्याख्यायते । नामाख्यातोपसर्गनिपातेति भेदचतुष्टयमुपक्रम्य महाभाष्ये व्याख्यातः । पशुषु वाच एको भागः, पक्षिष्वेकः, सरीसृपेष्वेकः, तुरीयस्तु मनुष्येषु; इत्यपि क्वचिद् व्याख्यायते । परं परापश्यन्तीत्यादिभेदचतुष्टयानुवादेन तु

समनुगतार्थमिदं सुस्पष्टतया भवति 'तुरीयं वाचो मनुष्या वदन्ति' इति। एवं च सम्मुग्धज्ञानरूपया पश्यन्त्या स्फुटज्ञानरूपया च मध्यमया वैखरीवागियमर्थावबोधक्षमा भवतीति न कोऽप्यत्र विवादावसरः।

शास्त्रपञ्चाशिकायामप्युक्तम् —

या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टि-
र्वर्णानन्तः प्रकटकरणैः प्राणसङ्गात् प्रसूते।
तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां
वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥५॥ इति।

पश्यन्त्येव च वक्त्रकुहरं प्राप्ता कण्ठादिस्थानभागेषु विभक्ताकारादिवर्णरूपा वैखरी वागुच्यते। ततः सैव बाह्यार्थवासनयाऽविद्यारूपया क्रमेण घटपटाद्याकारैर्विवृता चक्षुरादिना गृह्यते। 'तिस्र एव वाचः' इति मतेनेदम्, 'परा वाक् चतुर्थी' इति मते तु परैव वाग् ब्रह्मरूपेति विवेकः।

इदमत्र रहस्यम्—कार्येषु कारणधर्मसमन्वयदर्शनाद् वैशेषिकैर्घटादिकार्यस्य पृथिवीत्वेन तत्कारणस्य परमाणोः पृथिवीत्वम्, सांख्यैश्च विकारग्रामेषु सुखादिसमन्वयदर्शनात् तत्कारणस्य प्रधानस्य सुखादिरूपत्वं यथाऽऽस्थीयते, तथैव घटादिषु पदार्थेषु शब्दरूपानुगमात् तत्कारणस्यापि शब्दरूपत्वं शाब्दिकैः स्वीक्रियते। जात्यादीनां मिथो विशेष्यविशेषणभावानवगाहिजात्यादिस्वरूपावगाहि 'घटघटत्वे' इत्येवंरूपं निर्विकल्पकम्; 'गौः, शुक्लः, चलः, डित्थः' इत्यादिविशेष्यविशेषणभावावगाहि सविकल्पकं वा शब्दानुविद्धमेवेति सर्वेऽर्थाः सर्वथा सर्वदा सर्वत्र नामधेयेनान्विता इति नास्ति सोऽर्थो यः कथञ्चित् कदाचित् क्वचिन्नामधेयेन वियुज्येतेति शब्दार्थयोस्तादात्म्यमभ्युपेयम्। अत एवार्थाः प्रतीयमाना नामधेयैरुपेताः स्वसामानाधिकरण्येनावगम्यन्ते—गौरित्यर्थः, अश्व इत्यर्थ इति।

एवं च निर्विकल्पकं सविकल्पकं वा ज्ञानं 'गौः, शुक्लः, चलः, डित्थः' इति शब्दविशिष्टमेवार्थमवबोधयति। शब्दाख्यविशेषणानुरक्तस्य तस्य विशेष्यस्य स्वरूपं पृष्टस्त्वं शब्देनैव दर्शयति, शब्दापरित्यागलब्धप्रकाशस्वरूपया वानुभूत्याऽनुभवसीति सोऽपि विशेष्यः शब्दरूप एवेति जानीहि। शब्द एवार्थोपारूढः प्रतिभातीति व्यवतिष्ठते। अथ च यदुपारूढः शब्दः प्रकाशते, तस्य पृथक् प्रदर्शयितुमनुभवितुं चाशक्यत्वाच्छब्द एव तथा प्रतिभाति। यथा चेन्द्रियजज्ञानेषु प्रक्रमस्तथा शाब्देष्वपि प्रत्ययेषु शब्दविशिष्टो वार्थः शब्दारूढो वार्थः प्रतिभातीति शब्द-

विवर्त एवायमर्थः, नान्यः कश्चित् । अतश्च शब्दब्रह्मेदमेकमविद्योपाधिदर्शितविचित्रभेदमविद्योपरमे यथावस्थितरूपं प्रकाशत इति सिद्धम् । तदुक्तं हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥
( वा० १।१ )

श्रुतिश्चाप्यमुमर्थमनुमोदते—

वागेव विश्वा भुवनानि जज्ञे नामैवेदं रूपत्वेन वव्रृते ।
( वा० १२१ टीका )

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च तत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

इति स्मृतिरप्यत्रानुकूला । शाब्दिकैस्तु परं ब्रह्मैव शब्दब्रह्मपदेनोच्यते । एतच्चौपनिषदममृतं शब्दब्रह्म शाब्दिकः समश्नुते । उक्तं च भगवता भाष्यकारेण—"एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति" इति । तथा हि—व्यवस्थितसाधुत्वेन रूपेण शब्दतत्त्वे संस्क्रियमाणेऽपभ्रंशरूपप्रतिबन्धकापगमे धर्मविशेष आविर्भवति । ततः शब्दब्रह्मतादात्म्योपगमरूपा ब्रह्मणः प्राप्तिर्भवति । तथा चोक्तं हरिणा—

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते ॥
( वा० १।१३२ )

"इह द्वौ शब्दात्मानौ—कार्यो नित्यश्च । तत्रान्त्यः सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभः, तस्मिन् खलु वाग्योगवित् शास्त्रजशब्दज्ञानपूर्वकं प्रयोगेण क्षीणपापः पुरुषो विच्छिद्याहङ्कारग्रन्थीन् अत्यन्तं संसृज्यत इति तदर्थः इति तद्व्याख्यातारः" इति नागेशः ।

एवं च शब्दशास्त्रस्य ब्रह्मप्राप्तिसाधकत्वरूपं दार्शनिकं स्वरूपं सिद्धम् ॥

# दूतकाव्यपरम्परायां हंससन्देशः

श्रीअशोककुमारकालिया, बिड़लाहाल-मोतीमहल-लक्ष्मणपुरस्थः ।

रम्याणि दृश्यानि वीक्ष्य मधुरांश्च शब्दान् निशम्य यदि कस्यचित् सुखिनोऽपि जन्तोर्मनसि क्षोभः सम्भवति, तर्हि ये वस्तुतः प्रियवियुक्ताः प्रियसमागमकाङ्क्षिणश्च, तेषां हृदीदृशः क्षोभः, अथ चातोऽप्यधिकं किञ्चित् कथं न सम्भाव्यते । एतस्य प्रियवियुक्तस्य पान्थस्य मरणमप्यभूत्—

सव्याधेः कृशता क्षतस्य रुधिरं दष्टस्य लालाश्रुतिः
किञ्चिन्नैतदिहास्ति तत्कथमसौ पान्थस्तपस्वी मृतः ।
आः ! ज्ञातं मधुलम्पटैर्मधुकरैरारब्धकोलाहले
नूनं साहसिकेन चूतमुकुले दृष्टिः समारोपिता ॥[१]

एषा खलु संस्कृतसाहित्यस्य परम्पराऽस्ति यद् भ्रमराणां गुञ्जनम्, कोकिलानां कूजनम्, मेघानामागम इत्येतान् सर्वान् दृष्ट्वा प्रियवियोगं विस्मृतवतामपि प्रियसान्निध्यकामना भृशमुद्दीप्ता भवति । इत्थमीदृशकामनाया उद्दीप्तौ विरहिणस्तथा मुह्यन्ति, यथा जडायां प्रकृतावपि सर्वकार्यक्षमत्वमारोपयन्ति । तत्र ते प्रियायाः सौन्दर्यमृदुस्वभावादिकमधिकृत्य सम्बोधन-निवेदनादिपूर्वकं यत्किञ्चिदालपन्ति । अत्रायुक्तिमन्नाम काव्यदोषोऽस्तीति वदन्ति भामहप्रभृतयः—

अयुक्तिमद्यथा दूता जलभृन्मारुतेन्दवः ।
तथा भ्रमरहारीतचक्रवाकशुकादयः ॥
अवाचोऽव्यक्तवाचश्च दूरदेशविचारिणः ।
कथं दूत्यं प्रपद्येरन्निति युक्त्या न युज्यते ॥[२]

यदत्र काव्यदोषत्वेनोदाहृतं तत्तु काव्यसौन्दर्यमेवेति ब्रूमः । यतो हि काव्ये युक्तेः प्राधान्यं न भवति, अपि तु कल्पनाया एव । कल्पनायाः प्राधान्ये युक्तिपक्षस्तु स्वयमेव शिथिलो भवति ।[3]

---

१. शार्ङ्गधरपद्धतौ ।

२. काव्यालङ्कारे १, ३७, ४२ ।

३. "It is the privilege, nay, the duty of the poet to tell lies skilfully. At the outset the poet must be allowed to make certain primary assumd-

सन्देशकाव्यकर्तारस्तु युक्तिमपि प्रदर्शयन्ति। यथा कालिदासेनैव कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु' इति; हंससन्देशेऽपि 'याच्ञा दैन्यं भवति किमुत क्वापि संवेदनार्हम्' इति। कथं कालिदाससदृशो दुष्टकाव्यं कुर्यादित्यतो मन्येऽनन्तरमेभिरेवमुक्तम्—

यच्चोत्कण्ठया यत्तदुन्मत्त इव भाषते।
तथा भवतु भूम्नेदं सुमेधोभिः प्रयुज्यते॥[१]

काव्यालङ्कारकारकथनमेवं युक्तं ब्रूमो यत् सामान्यावस्थायां तथाविधदूतसम्प्रेषणं सर्वथाऽयुक्तिमदस्ति। तदेव चेदुत्कण्ठया क्रियते तर्हि तन्न दोषायेति। अत्र सामान्यावस्थायां यद्दोषाय तदेव विशेषावस्थायां सौन्दर्यायेत्युच्यते चेत्, सर्वमपि समञ्जसं भवति। तथा भवतु भूम्नेदं सुमेधोभिः प्रयुज्यते'; सुमेधोभिः प्रयुज्यते, अतः कथञ्चित् सह्यमस्तीति कथनमेवासह्यमस्ति।

एवं सति ते विरहिणो न केवलं यस्य कस्यचिदर्हस्यानर्हस्य वा समक्षमालपन्ति, अपि तु प्रियसन्निधौ वक्तव्यं सन्देशमपि दातुमर्हन्ति। ईदृश्याः परम्परायाः सूत्रारम्भः कालिदासीये मेघदूत एवाभूत्। अनन्तरं मेघसन्देशं मेघदूतं वानुसृत्य बहुभिर्दूतकाव्यानां रचना कृता।

## मेघदूतस्य प्रेरणाः

अत्र प्रश्नः समुल्लसति कुतो वा कालिदासेन मेघसन्देशस्य कथानको लब्धः? किं वा मेघसन्देशस्य रचनायां प्रेरणात्वेनासीत्? वस्तुतः कालिदासतः प्राग् दूतसम्प्रेषणोदन्ता यत्र कुत्रचित् प्राप्यन्ते। यथा—

१—ऋग्वेदे सरमानाम्नीं कुक्कुरीमिन्द्रो दूतीत्वेन नियोजयति। सा गन्तव्यस्थानं गत्वा स्वपरिचयमेवं ददाति—

---

tions and create his own environment. By the vividness of narrative and minuteness of detail and above all by the natural sequence of incident and motive, things are made to happen exactly as they would have happend, had the fundamental fiction been true.

—Butcher's lectures on Aristotle

१. काव्यालङ्कारे, १, ४४।

इन्द्रस्य दूतीरिषिता चरामि मह इच्छन्ती पणयो निधीन् वः ।
अतिष्कदो भियसा तन्न आवत् तथा रसाया अतरं पयांसि ॥[१]

२—महाभारते नलेन दमयन्तीसन्निधौ हंसस्य सम्प्रेषणम् । नैषधेऽप्यस्याः कथाया एव विस्तृतिः ।

३—रामोऽपि हनुमद्द्वारा सीतायै सन्देशं प्रेषयति । अस्योल्लेखोऽपि कालिदासेन मेघदूते कृतः—

इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा ।
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य चैवम् ॥[२]

अत एव वाल्मीकिरामायणे सीताया अपहरणे संजाते तत्र वर्णितं रामवियोगावस्थापवनतनयलङ्कागमनादिकं च वीक्ष्य कालिदासः सम्प्रेरित आसीत् । तदनुरोधेनैव कालिदासो मेघदूतनाम खण्डकाव्यमरचयदिति प्रतीयते । बहूनां च मतमपीत्थमेवास्ति । किन्तु ये केचिदाधुनिका वाल्मीकिरामायणस्य कालिदासतः प्राक् स्थितिरेव नासीदिति सप्रमाणं वदन्ति ।[3]

कामं स्वीक्रियतां रामायणस्यार्वाचीनत्वम्, वयं त्वेतदेव ब्रूमो यद् रघुवंशे पवनतनयस्य दूतरूपेण लङ्कागमनम्, नमिताभिर्लताभी रामाय मार्गदर्शनम्, मृगाङ्गनाभिर्दक्षिणदिशः संकेतश्च यया प्रेरणया संजातः, सैव प्रेरणा अत्राप्यवगन्तव्या । ऋते वाल्मीकीयात् प्रेरणायां निदानं तु महाभारतस्य रामोपाख्यानमेव । रामकथाया अतिप्राचीनत्वादुपर्युक्तश्लोके तस्या उल्लेखाच्च मेघसन्देशस्य प्रेरणात्रैव निहितास्तीति सुतरां सम्भवति ।

४—महाभारत एव कृष्णेन युधिष्ठिरस्य सन्देशो दुर्योधनं प्रति नीयते ।

५—कामविलापनाम्नि बौद्धजातके कश्चित् पूर्वां प्रियां प्रति काकद्वारा सन्देशं प्रेषयति ।[४]

१. ऋग्वेदे, १०।१०८।२।

२. मेघदूते, २, ३७।

३ Discovery of Vyasa and Valmiki by P. K. R. Kurup.

४. उच्चेसकुणडेमान-पत्तयान-विहंगम ।
वज्जासि खो त्वं वामूरुं चिरं खो साकरिस्सति ॥ १ ॥
इदं खो सान जानाति असिं सत्तिञ्च ओड्ढतं ।
सा चण्डी काहति कोधं तं मे तपति नो इध ॥ २ ॥
एस उप्पलसन्नाहो निक्खमुस्सीसके कतं ।
कासिकं च मृदुं वत्थं तप्पतु धनकामिका ॥ ३ ॥
( कामविलापजातकम् )

एवं कालिदासतः प्रागपि दूतसम्प्रेषणस्य शृङ्खला दृश्यते। एषु किञ्चिदपि कालिदासस्य प्रेरणास्पदत्वमर्हति। हंससन्देशस्य विषये न किञ्चिदपि विशेषतः कथनीयमस्ति। सर्वेषामपि दूतकाव्यानां प्रेरकं कालिदासस्य मेघदूतमेवास्तीत्यत्र न कश्चिदपि संदेग्धि, तथापि सन्देशनयनाय हंसस्यैव स्वीकरणे महाभारतीयनलोपाख्यानमेव कारणमस्ति। मन्ये कविरनयोक्त्या स्वीकरोतीमभिप्रायम्—

प्रागप्येवं परिणतगुणां नैषधे वीक्ष्य वार्ता-
मार्तत्राणं व्रतमिति विदुर्हंस! शुद्धात्मनां वः ॥१॥

## कालिदासोत्तरदूतकाव्यानि

कालिदास एव दूतकाव्यानां प्रतिनिधिरास्त, तद्विरचितकाव्यस्याद्यत्वादद्वितीयत्वाच्च। कालिदासानन्तरं बहूनां दूतकाव्यानां निर्मितिः सञ्जाता। तत्र च धोयीविरचितस्य पवनदूतकाव्यस्य माहात्म्यं बहु श्रूयते। प्राचीनदूतकाव्येष्वेवास्य गणना क्रियते। सहृदयैः केरलदेशीयैस्तु बहूनि दूतकाव्यानि विलिखितानि। शुककोकिलचातकभ्रमरगरुडकोकमयूरादयस्तेषां प्रियदूताः सन्ति। प्रायो दशमशताब्द्यनन्तरमेव बहूनां दूतकाव्यानां रचनाऽभूत्। वेदान्तदेशिकस्य समयः १२६८ तः १३७० पर्यन्तमासीत्। तदानींतनी परिस्थितिरपि मन्ये दूतकाव्यानामेवासीत्। मयूरसन्देशस्य रचना चतुर्दशशताब्दीमध्येऽभूत्। स एव समयो वेदान्तदेशिकस्याप्यासीत्। कोकिलसन्देशकर्तुरुद्दण्डस्य स्थितिर्मयूरसन्देशतः प्रागासीत्। अत्र मयूरसन्देशवचनं प्रमाणम्—

उद्दण्डाख्यः सुरभिकवितासागरेन्दुः कवीन्द्र-
स्तुण्डीरक्ष्मावलयतिलकस्तत्र चेत् सन्निधत्ते ॥ इति।

शुकसन्देशस्य प्राचीनत्वे विप्रतिपत्तिर्नास्ति। अत्रैतत्सर्वस्य तात्पर्यमेतदस्ति यद्वेदान्तदेशकीयहंससन्देशस्य रचनाऽवसरे सन्देशकाव्यानामेव विकाससमय आसीदिति। अतः सोऽवसर एव प्रस्तुतायां रचनायां कारणत्वेन वक्तुं शक्यते। 'हंससन्देशः' इति नाम्नैव प्रायो ग्रन्थत्रयाणां रचनाऽभूत्। एकस्य हंससन्देशस्य रचयिता कश्चिद् वामनभट्टनामा दाक्षिणात्य आसीत्; अपरस्य च पूर्णसरस्वतीति नामधेयः कश्चिदस्ति पञ्चदशशताब्दीयः।

## हंससन्देशः

प्रस्तुतस्य हंससन्देशस्य रचयितारः कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रवेदान्ताचार्यादिबिरुदभूषिताः श्रीवेङ्कटनाथाः सन्ति। एभिः सर्वविषयानधिकृत्य प्रायो विंशत्युत्तरशतैकग्रन्थानां रचना कृताऽस्ति। हंससन्देशस्तेषु चारुतमः। एवं प्रतीयते यदनेन पण्डितवर्येण विचिन्तितं यद्दूतकाव्यानां यन्मूलमस्ति तां रामकथामाश्रित्य न केनापि किञ्चिल्लिखितमस्ति। अथवा

स्वसर्वत·त्रस्वतन्त्रत्वख्यापनार्थमेव प्रवृत्तोऽभूत्। श्रीतृतीयब्रह्मत·त्रस्वतन्त्रस्वामिभिर्मणिप्रवाल-रीत्या विरचिते श्रं गुरुपरम्पराप्रभावनामग्रन्थे किञ्चिदन्यदेव प्रयोजनं लिखितमस्ति। यथा ह्येकदो-त्तरदेशात् कश्चित् कृष्णमिश्रनामा पण्डितो वेङ्कटनाथवेदान्तदेशिकेन स· शास्त्रार्थं चिकीर्षन् दक्षिणदेश आगतः। स एभिः सह दिनत्रयपर्यन्तं शास्त्रार्थं कृत्वा पराजितोऽभूत्। कृष्णमिश्रेणोक्तं यत् स तानन्येद्युः स्वविरचितं प्रबोधचन्द्रोदयनामनाटकं दर्शयिष्यति। वेदान्तदेशिकेनापि कथितं यत् सोऽपि रात्रौ लिखित्वा कल्ये स्वसंकल्पसूर्योदयनामनाटकं दर्शयिष्यति। अस्मिन् ग्र·थे प्रबोधचन्द्रो·यनाटकस्य विषयं न जाने कथं ज्ञात्वा खण्डितवान्। अथ च स स्वपराजयं स्वीकृत्य प्रत्यागच्छत्। तस्य पराजयं श्रुत्वा श्रीडिण्डिमनामा कश्चन कविः श्रंवेदान्तदेशिकं स्वरामाभ्युदय-नामकं का·म·र्श·त्। वे ान्तदेशिकोऽपि यादवाभ्युदयं, हंससन्देशञ्च लिखित्वा तमुप-ज ारेति तत्र लिखितमस्ति, किन्तु हंससन्देशसदृशका·स· सृष्टिः शक्तिप्रदर्शनार्थं प्रतिस्पर्धया वा संजातेति न विश्वासपदवीमधिरो·ति।

अस्मिन् काव्ये वेदान्तदेशिकेन सर्वथा कालिदास एवानुकृतः। मन्दाक्रान्ताछन्दसः स्वीकरणम्, पूर्वोत्तरमेघवद् हंससन्देशस्य प्रथमद्वितीयाश्वासयोर्विभाजनम्, सर्वमपि काव्यस्वरूपं मेघदूतस्यैवास्ति। वर्णनविधिरपि तेन प्रभावितो दृश्यते। तथाऽपि वेदान्तदेशिकस्य विलक्षणं व्यक्तित्वं काव्ये तत्र तत्र स्फुटं प्रतीयते मौलिकता चाक्षताऽस्ति। अन्यथा विष्णुवैष्णव-विरोध्यप्पयदीक्षितोऽप्येवं कथं वदेत्—

इत्थं विचिन्त्याः सर्वत्र भावाः सन्ति पदे पदे।
कवितार्किकसिंहस्य काव्येषु ललितेष्वपि[१]॥

## काव्यस्य कथावस्तु

प्रसिद्धकल्पितसंकीर्णभेदात् त्रिविधं कथावस्तु। इत्थं प्रतिपादितमस्ति—

इतिवृत्तकथावस्तुशब्दाः पर्यायवाचकाः।
इतिवृत्तं प्रबन्धस्य शरीरं त्रिविधं हि तत्॥
ख्यातं कल्प्यं च संकीर्णं ख्यातं रामायणादिकम्।
कविबुद्धिकृतं कल्प्यं माधवादिविचेष्टितम्॥
संकीर्णमुभयायत्तं नलराघवचेष्टितम्[२]॥

---

१. यादवाभ्युदयटीकायाम्।　　२. रसार्णवसुधाकरे।

अस्य हंससन्देशकाव्यस्य कथावस्तु संकीर्णमस्ति। रामायणकथातो गृहीतत्वात् ख्यातम्, अंशे कविबुद्धिजन्यत्वात् कल्प्यम्, एवं सत्युभयकोटिसिद्धत्वात् संकीर्णकोटावेवायाति।

मासमेकं प्रतीक्ष्य सीता प्राणं त्यक्ष्यति विश्लेषदुःखस्यासह्यत्वात्, दुर्जनसन्निधेश्च। तथैवं न कर्तव्यमित्याश्वासनाय हंसं रामो दूतत्वेन प्रषयतीयमेव कथा।

## उपोद्घातो रामेण हंसप्रसादनञ्च

लङ्कायाः प्रत्यागत्य हनुमता रामाय निवेदितं यद् रामं प्रतीक्षमाणा सीता केवलं मासमेकं प्राणान् धारयिष्यति। अतस्तत्क्षणमेव यद्यपि रामेणाभियानार्थं वानरसेनाऽऽदिष्टा, तथाऽपि मनसीयमेवाशङ्कासीद् यत् सर्वथा शीघ्रमेवाक्रमणमिच्छताऽपि मया विलम्बो जायते चेत् सीतायाः प्राणत्यागरूपो महाननर्थो भविष्यति। अतः कथं वा सीता समाश्वासनीयेत्येवं चिन्तयन् रामः कथञ्चित् कल्पाकारां रात्रिं सोढ्वा प्रत्यूषवेलायां कुतश्चित् स्थानाद् निकटस्थे सरोवरे समायान्तं राजहंसमपश्यत्। इत्येतावता श्लोकद्वयेन सन्देशस्योपोद्घातः. सन्देशवाहस्य राजहंसस्य दर्शनञ्च वर्णितमस्ति। अनन्तरं सीताया गतिमनुगच्छन्तं तस्या धवलदुकूलस्य चिह्नभूतां मूर्तिं धारयन्तम्, तन्नूपुरवच्छब्दं कुर्वन्तं राजहंसं दृष्ट्वा वीरोऽपि रामो मुमोह। तत्र कारणमस्ति यत् समये सम्प्राप्ते कामदेवस्य शासनं दुर्निवारं भवतीति। पुनः संज्ञामागत्य हंसं दूतत्वेन प्राप्यातीवानन्दतुन्दिलः सञ्जातः। यतो हि कामिनां दूतलाभः कान्ताश्लेषादधिकसुभगो भवति। अतीव खल्विदमसमञ्जसं प्रतिभाति यद् वार्तानभिज्ञोऽयं राजहंसः. सन्देशनयनार्थं प्रार्थ्यते। वस्तुतो ये जना विश्लेषेण क्षुभितमनसः सन्ति, तेषां याच्ञादैन्यं संवेदनार्हेऽनर्हे वा सर्वत्रैव प्रसरति—इत्येतच्छ्लोकत्रयेणोक्त्वा चतुर्भिः श्लोकै राजहंसप्रशंसा, दूत्यौचित्यम्, गन्तव्यस्थानम्, रामस्य प्रीत्यर्थं सीतायाश्च जीवनार्थं लङ्कागमन प्रार्थनादिकं वर्णितमस्ति। दशमश्लोकादारभ्य षोडशश्लोकपर्यन्तं मार्गे दुःखमपि नानुभविष्यसीति प्रतिपादितम्। मेघानां विगमे सति मेचकवियुक्तानां मयूराणां निष्कूजत्वं वीक्ष्य मार्गे तव संमोदोऽपि भविष्यति। आमोदानामहमहमिकया गन्धवाहाः स्वागतपूर्वकं भवतां सेवामपि करिष्यन्ति। एवं विविधस्वागतसम्मानादिकं स्वीकुर्वन् त्वं मार्गमतिक्रम्य सीतां द्रक्ष्यसि। तव प्रिया कमलिन्यपि मैथिलीसौहृदेन तुभ्यमनुमतिं दास्यति। इत्थं दक्षिणदिशं प्रति प्रस्थानं कुरुष्व।

## मार्गोपदेशः

एवं सर्वथा त्वया प्रस्थातव्यमिति निवेद्य केन मार्गेण गमिष्यसीति मार्गवर्णनमारभते। त्वदुड्डयनसमनन्तरमेवैष माल्यवान् शैलस्त्वच्छायां हृदि निधायातिशोभां धरिष्यति। रामो हंसमेवं सम्बोधयति—लङ्कागमनार्थं हनुमता मह्यं द्वौ मार्गावुक्तौ। यद्यपि पश्चिममार्गः सन्निकृष्टो वर्तते, तथापि सर्वदा मेघाच्छन्नत्वात् त्वदयोग्यः, पूर्वमार्गो विचित्रतया यत्र कुत्रचित् तव दृष्टिं विमोहयिष्यति, तथापि मदर्थं साऽवश्यमेव त्वया निवार्या। त्वदीयां मधुरां ध्वनिं श्रुत्वा प्राकृतरमण्यः स्वस्वगृहात् सादरं निर्गत्य कुतूहलेन त्वां द्रक्ष्यन्ति। तासां भ्रूभङ्गानभिज्ञत्वेऽप बहुकार्यकारिभिः कटाक्षैः सम्यग् दृष्टः सन्नस्मात् पर्वतप्रदेशाद् गच्छेः। अथ चाग्रे कर्णाटान्ध्रसीमां प्राप्स्यसि। तत्रेक्षूणां छायायामासीनाः शालिसंरक्षिकाः परस्परं संलापैः प्रसन्नहृदयाः सीमाप्रदेशीयगीतालापभेदान्मुह्यन्त्यो भविष्यन्ति। तासां मदनकलुषस्य मौग्ध्यस्यास्वादनमवश्यं कुर्याः। अनन्तरं वेङ्कटाद्रिं वर्णयति—अस्मादनन्तरं शेषाद्रिं प्राप्स्यसि। नायमद्रिरपि तु हृदि विष्णोर्वासात् पृथिव्या धारणाच्च फणैर्मणिभूषितशिरोभिर्वा साक्षात् शेष एव। त्वमपि यथाशक्ति भगवतां सपर्यां कुर्याः। अस्याद्रेर्दक्षिणस्यां दिशि सुवर्णमुखरी नद्यस्ति। मध्ये मध्ये द्वीपवती सा नदी मन्ये तव निवासमिच्छन्त्येव तथा वर्तते। स्वहस्तभूताभिर्वीचिभिस्तटस्थविटपिनां कुसुमानि शिवार्चनार्थमुपहरन्तीं सुवर्णमुखरीं दूरतो द्रक्ष्यसि। मार्गश्रमखिन्नेन त्वया तत्रावश्यमेव विश्रस्य गन्तव्यम्। अववेयोऽत्र विश्रामविधिः—वानीरपुष्पाणां गन्धविशेषयुक्तैः पुलिनपवनैर्मन्दं मन्दं वीजनोपचारादिभिः सत्कृतः सन्नुद्दीतः सन् वा निःशब्दमेनामुपभुज्य तत्रात्यासक्तिं त्यक्त्वा तत्कालमेव स्वाकाशपदवीं गच्छेः, येन तटवर्तिनः किराता भवन्तं मा बन्दीकुर्युः। अनेन कालिदासस्य 'तस्याः किञ्चित्करधृतमिव' इति श्लोकः स्मारितो भवति। तदनन्तरं तुण्डीरमण्डले सत्यव्रताख्यक्षेत्रे यास्यसि। तस्मिन् क्षेत्रे पृथिव्या भूषणभूतां काञ्चीनाम्नीं नगरीं द्रक्ष्यसि, यां परमपुरुषो हस्तिशैलाधिपतिः सर्वदा कृपया कटाक्षयति। तत्र च त्वयापि प्रणामः कार्यः। एवं तुण्डीरमण्डलवैभवमेकादशैः श्लोकैर्वर्णितम्। अनेन कवेः काञ्चीविषये गौरवबुद्धिरुक्ता भवति। वस्तुतो भारतभूमौ वैष्णवानामष्टोत्तरशतदिव्यदेशाः सन्ति। तत्र तुण्डीरमण्डले द्वाविंशतिदिव्यदेशाः सन्ति। तेषु काञ्चीपुरी प्रसिद्धतमा। वैष्णवानां काञ्चीविषये गौरवबुद्धिरस्त्वस्त्येव, किन्तु वेदान्तदेशिकविषये कश्चिद् विशेषोऽपि लक्ष्यते। वस्तुतः काञ्ची एतेषां जन्मभूमिरप्यस्ति। तत्र काचिद् वेगवतीनाम पुण्यतोया नदी प्रवहति। तस्यां हंसेनावश्यमेव स्नातव्यम्, शरीरशुद्ध्यर्थं विश्रमार्थं च। तस्यास्तीरे वरदराजदेवस्थानं वर्तते। तं च विद्युद्रूपया लक्ष्म्या शोभितं

नीलमेघत्वेन दृष्ट्वा मा भैषीः, यतो हि त्वादृशैः, देवेषु हंसभूतैः ( श्रेष्ठभूतैरित्यर्थः ) प्रतिदिनं पूजितः सन् स हंसीभूतो ( हंसावतारे ) देवो भवतामग्रज एव । एकवंशीयौ भवान् भगवांश्च । स देवोऽवश्यमेव सेव्यो भवद्भिः । तुण्डीरमण्डलस्य वर्णनानन्तरं चोलमण्डलं वर्णयति । अस्मिन् मण्डले चत्वारिंशद्वैष्णवदिव्यदेशाः सन्ति । तत्र श्रीरङ्गम्नाम स्थानमत्यधिकं महत्त्वपूर्णमस्ति । काञ्चीतोऽस्य वैभवं कथमपि न्यूनं नास्ति । एकादशैः श्लोकैश्चोलमण्डलं वर्णयति । अस्मिन् मण्डले श्वेताद्रिवर्णनम्, कावेरीवर्णनम्, नीलीवनवर्णनं तथा च श्रीरङ्गक्षेत्रवर्णनं कृतमस्ति। अत्रत्याश्चोलमण्डलवासिन्यः सुगन्धितहरिद्रानिर्मितैरङ्गरागैः सन्ध्यारुण्यं धारयन्त्यो ज्योत्स्नया सह कलहिनं तिमिरं केशद्वारा दधानाः, यौवनमदेनाव्यक्तगिरः कमलेक्षणा अङ्गनास्तत्र तत्र स्थानेषु भवतां नयनानन्दं रचयिष्यन्ते । श्रीरङ्गक्षेत्रवर्णनावसरे एतत् स्पष्टमुक्तमस्ति यच्छ्री-रामस्य कुलदेवाः श्रीरङ्गभगवन्त एव । अतः स्वभावतो रामस्य श्रीरङ्गक्षेत्रेऽतिप्रीतिर्दृश्यते । स कथयति शुद्धसत्त्वसमये पेटिकायां प्रकाशमानमरकतमणिरिव दिव्यविमानस्यान्तः शेषशय्यायां शयानं लक्ष्मीजीवितं प्रति मम हृदयं भुजमुद्धृत्य धावति । अस्यानन्तरं पाण्ड्यदेशवर्णनं वर्तते । पाण्ड्यदेशीयवैष्णवदिव्यदेशा अष्टादश एव सन्ति । ततो भवद्भिर्मूकीभूयैव गन्तव्यम् । अत्र 'शब्दायन्ते न खलु कवयः सन्निधौ दुर्जनानाम्' इति सूक्तिर्ध्येयाऽस्ति । तस्मिन् पाण्ड्यदेशे तत्रत्या अङ्गनास्त्वां सम्मानयिष्यन्ति । ताः किल स्रस्तशिरोमाल्यम्, व्याकीर्णकुन्तलम्, बहुधा भ्राजितं मुखमुन्नमयन्त्यो मधुध्वनिं कुर्वतस्तव सम्भावनां मालावदीर्घैः कुवलयकटाक्षैः करि-ष्यन्ति । तत्रैव त्वं वृषभाचलमपि द्रक्ष्यसि, यत्र श्रीसुन्दरबाहुभगवतां स्थितिर्वर्तते । प्रणामा-दिकं कृत्वा त्वया ततः प्रस्थातव्यम् । पाण्ड्यदेशान्निर्गत्य ताम्रपर्णीनाम्नीं नदीं द्रक्ष्यसि । तत्रापि त्वया विश्रम्यैव गन्तव्यम् । विश्रमः कथमिति वर्णयति, तस्यास्ताम्रपर्णीनद्याः सरसिजमुखस्य यथेच्छमधरामृतास्वादेनानन्दीभूय तरलोर्मिबाहुसंश्लेषेण शीतीभूतः सन् पुलिनमधितिष्ठन् मलयानिलैर्वीजितो भवान् शान्तिं श्रान्तिं गमयतु । अत्र पुलिनशब्दो जघनार्थकोऽपि । अतो जघनारूढत्वं द्योतितम् । शरत्कालीनं वर्णनमपि वर्तते । अतोऽयं श्लोक इमामुक्तिं स्मारयति—

दर्शयन्ति शरन्नद्यः पुलिनानि शनैश्शनैः ।
नवसङ्गमसव्रीडा जघनानीव योषितः ॥

अनन्तरं दूरतस्तद्वामभागस्थितां समुद्रवेलां द्रक्ष्यसि । तत्रत्यं रामणीयकं दृष्ट्वाऽप्यनासक्त्या लङ्कापुरीं प्रति जवेन गच्छेः । तदनन्तरं दावानलेनासक्तं वनमिव, संध्यारागेणानुविद्धं नभ इव, सिन्दूरचिह्नितं गजमिव, पीताम्बरसहितं नारायणमिव, विद्युद्भिन्नं घनमिव, शरीरेणैकीभूतं

मिथुनमिव, विद्रुमवनसंयुक्तं समुद्रं द्रक्ष्यसि। पौराणिकीं कथां स्मारयत्यग्रिमेण श्लोकेन। अयं समुद्रोऽस्मत्पूर्वजैरश्वमेधयज्ञीयतुरङ्गदिदृक्षया पृथिवीं भित्वा विवर्धितः। अतो यदि ममायं बन्धुस्तव सत्कारार्थं गुप्तपक्षान् पर्वतानादिशति तर्हि सर्वथोचितं प्रणयं स्वीकुर्याः, तत्र कस्मिंश्चित् सुवर्णकमलमये सरोवरे उपविशन्नमितमधुपानमुखेन मार्गश्रमं त्यक्त्वाऽवशिष्टं समुद्रमुल्लङ्घ्य सुरम्यं सुवेलपर्वतं द्रक्ष्यसि। एवं सुवेलं श्लोकत्रयेण वर्णयति। अनन्तरमस्य प्रथमाश्वासस्यान्तिमे षष्टितमे श्लोकेऽग्रे वर्ण्यमानाया लङ्कायाः परिचयो दीयते। तत्रस्थस्य भवतश्चारुसौधैः स्वच्छतमेयं लङ्का सागरस्य महति पुलिने (त्रिकूटगिरौ) राजहंसीव लीना भविष्यति। भवद्भिः सर्वथा दर्शनीया सेति तात्पर्यम्। या खलु श्रुतिमधुरनादा लङ्काराजहंसी भवन्तं प्रियतममायान्तं दृष्ट्वा पवनचालितैः पताकापक्षैः स्वागतार्थं जिगमिषन्ती स्थास्यति। एवं लङ्कापर्यन्तं मार्गदर्शनं कृत्वा प्रथमाश्वासः समाप्यते।

## लङ्कावर्णनम्

प्रथमाश्वासेऽन्तिमश्लोकेन दत्तपरिचयां लङ्कां द्वितीयाश्वासे कतिपयैः श्लोकैर्वर्णयति। पूर्वमुक्तं यल्लङ्का राजहंसस्य राजहंसीव स्वागतं करिष्यति, सा च सर्वथा दर्शनीयाऽस्तीति। अत्रोच्यते यदस्यां लङ्कायां रावणेन बलादाहृताः सुरसुन्दर्यस्त्वामग्रे समुपस्थितं दृष्ट्वा कटाक्षादिभिरानन्दयिष्यन्ति। ताश्च सर्वथा शुद्धहृदयास्तेजस्विन्यः, नाशभयाद् रावणेनास्पृष्टा बन्दीकृतलोकपालप्रियाः सीतायाः प्रभावेणैव स्वरक्षां मुक्तिञ्च प्रतीक्षन्ते। एतावता रावणस्यातङ्कमुक्त्वा तत्रत्यं वैभवं वर्णयति। त्रिकूटस्य बहुरत्नमयोन्नतशिखरमध्यासीना सर्वत्र प्रथितकीर्तिना रावणेन सुरक्षिता एषा लङ्का स्वरत्नपौष्कल्येन मेर्वग्रे स्थितामरावतीमपि तिरस्करोति। मेघे विगते सति त्वद्विहारोचितेऽस्मिन् काले प्रियभूतस्य तव सामीप्याद् रजन्याः स्फुटैर्गर्वहासभूतचन्द्रालोकैः स्वर्गस्त्रियः प्रियविश्लेषाद् विक्षुब्धबुद्धयो भविष्यन्ति। एषा लङ्काया सार्वकालीना स्थितिः। इदानीं तु विश्वकर्मादिभिर्निर्मितेयं लङ्का सीतायाः शोकाग्निना (हनुमदवलम्बिना) भस्मीभूता दृश्यते। तत्पश्चाद् रावणभवनं द्रक्ष्यसि। देवानां विमानैः सेव्यमानं देवाङ्गनानां बन्दीगृहभूतं रावणगृहं वीक्ष्य विचित्रां चित्तवृत्तिं प्राप्स्यति।

## सीतावर्णनम्

किन्तु हे हंस! भवद्भिस्तत्र न स्थेयम्, अपि तु यत्र सीता रक्षिताऽस्ति साऽशोकवनिकैव गन्तव्या। तस्या वनिकाया अगरुतरुमूले भवान् यज्ञभूमिकर्षणोत्पन्नम्, स्वप्रभावेण भयहीनम्, पराक्रमप्राप्तं सूर्यवंशप्रकाशकं सीतानाम दिव्यरत्नं द्रक्ष्यति। सीतासौन्दर्यं वर्णयति—

सा मे दृष्टिश्शफरनयना संनतभ्रूः सुकेशी
तन्वी तुङ्गस्तनभरनता तप्तजाम्बूनदाभा।
बाला युष्मत्प्रतिमगमना वेदिमध्या वराङ्गी
शृङ्गाराख्यं निधिमधिगता श्रेयसी देवतेव[1] ॥

एवमङ्गप्रत्यङ्गं वर्णितं सीतायाः। प्रसादमाधुर्ये अपि द्रष्टव्ये अत्र।

अनन्तरेण श्लोकेन तस्या वर्तमानावस्थामेवाभिज्ञानं मत्वा निवेदयति—भवद्भिर्दर्शनीया प्रोषितभर्तृका सा सीता मोहालसा वा भविष्यति, मत्सामीप्यप्राप्तयेऽहमिव शकुन्तान् सन्देशं श्रावयन्ती वा भविष्यति, प्रियसन्देशसान्निध्यबोधकनिमित्तहेतोरेतामेव दिशं वीक्षमाणा वा भविष्यति, आभूषणान्युद्दिश्य 'भवद्भिः श्रीरामस्याङ्गस्पर्शः स्मर्यते वा न वेति' मोहादालपन्ती वा भविष्यति, पूर्वंकृताननेकशय्याविहारान् ध्यायन्ती वा भविष्यतीति युग्मेन प्रोषितभर्तृकायाः सीताया विकल्पनं कृत्वा दशश्लोकात्मकेन कुलकेन रावणगृहे सीताया दुरवस्थां वर्णयति, चाण्डालगृहे स्थापिता कौमुदीव, विषवृक्षषण्ड आनीता पारिजातशाखेव, दुर्जनाय निवेद्यमाना सत्कवेः सूक्तिरिव, पङ्कलिप्तविसलतेव सीता रावणसंरक्षणे भविष्यति। अत्रायं श्लोकः स्मृतो भवति—

इतरतापशतानि यथेच्छया वितरितानि सहे चतुरानन।
अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख मा लिख मा लिख ॥

हनुमताभिज्ञानरूपेण प्रदत्तं मदीयमङ्गुलीयं करकमले न्यस्य रोमाञ्चमनुभवन्ती, मौलौ निधाय सुखमनुभवन्ती, क्रमेणादरात् स्तनयोरपन्ती भविष्यति। अत्र प्रथमश्लोकस्य "मैथिलस्यात्मजातां मन्ये" इति वाक्यं सम्पूर्णकुलकस्य मुख्यवाक्यमस्ति। एवं तत्र तत्र कवेर्नवनवोन्मेषशालिन्याः प्रतिभापरनामप्रज्ञाया दर्शनं भवति। एतदनन्तरमेकेनैव श्लोकेन सीतायाः सर्वदुःखावस्थाः पुनः स्मारयति—

शून्या दृष्टिः श्वसितमधिकं मीलितं वक्त्रपद्मं
धाराकारं नयनसलिलं सानुबन्धो विलापः।
इत्थं दैन्यं किमपि विधिना दुर्निवारेण नीता
सा मे सक्ता तनुतरतनुस्तप्यते नूनमन्तः[2] ॥

---

१. हंससन्देशः, २। १०। २. हंससन्देशः, २। २३।

## हंसस्थितिः तत्करणीयश्च

एतादृशीं सीतायाः करुणावस्थां दृष्ट्वा भवन्तोऽपि शोकं सोढुं न शक्ष्यन्ति। यतो हि भवादृशा नैर्मल्यसम्पन्ना एव दयामालम्बन्ते। प्रत्यूषकाले यदा सर्वाऽपि निशिचर्यः स्वपन्ति तदैव भवद्भिः सन्देशो निवेदनीय इति मत्वा पूर्वां रात्रिं मार्गखेदापनयनार्थं निद्रया यापयन्तु। कमलेषु भ्रममाणभ्रमरनादयुक्ते प्रत्यूषकाल एव कार्यं चिकीर्षन् भवान् निद्रां त्यजतु। अगरुतरुमारूढोऽनन्यदृश्यो भवान् सत्संदेशनिवेदनात्पूर्वं रघुजनकयोः श्रुतिप्रियाया वंशकीर्तेर्वर्णनमुखेन मोहाद् भ्रान्तचित्तां मे प्रेयसीं बोधयतु। इत्थं त्वां सन्देशमानयन्तं मे प्रणयसचिवं ज्ञात्वा कथञ्चिद् वदनमुन्नमय्य सर्वथा धवलं शुद्धञ्च विश्वासपात्रं भवन्तं कटाक्षयन्ती सा मत्संदेशश्रवणार्थं सावधाना भविष्यति। तच्च स्वाभाविकमप्यस्ति स्त्रीणाम्, यतो हि प्रियसन्देशप्राप्तिरपि वियोगिनीनामानन्दमुत्पादयति। तदनन्तरमेवं सम्बोधयतु भवान् "भवत्या एव सौभाग्येन जीवितं धारयन्नहं रामो भवदीयं कुशलक्षेमं पृच्छामि" इति।

## सन्देशे रामावस्था

स रामो नयनपथि त्वां स्थापयित्वा नैरन्तर्येण त्वामेव चिन्तयन् मन्मुखेनैवं संदिशति त्येवं सन्देशप्रस्तावनां कृत्वा चतुर्दशभिः श्लोकैः संदेशं वर्णयति। तदित्थम्—'अयि सुतनु! एषा रात्रिः, या संश्लेषावस्थायां प्रणयपरतन्त्ररतिभावं प्राप्तवतोरावयोः सम्भोगोपक्रम एव परिरम्भणादिभिः क्षणमिव गता, सैव रात्रिरिदानीमनेकैः कल्पनाकृतसम्भोगैः खण्डिताऽपि नापयाति। पुरा तव कुचयोरूष्मसहायेन मया पराजितोऽयं गन्धवाहः सम्प्रति विश्लेषावस्थायामवसरं लब्ध्वा त्वद्वदनारविन्दसदृशैः कमलैः सह दैन्यं प्रापयति, अर्थादस्यामवस्थायां भवत्या मुखकान्तिं कमलेष्वेव पश्यामि। वनिताप्राणलोलुपैरमोघैः शरैर्युक्तं वसन्तं सर्वतो व्याप्नुवन्तं वीक्ष्य विगतपराक्रमोऽयं रामो नतेन शिरसैव न्यवेदयत्— भवद्भिः सीतापार्श्वे न गन्तव्यमिति। एवं कतिपयैः श्लोकैः शिशिरवसन्तस्थं राममुक्त्वा वर्षाकालीनां रामावस्थां वर्णयति—चपलाजलदयोः संयोगात् प्राप्तसामग्रीकोऽयं मयूरस्ताण्डवं चिकीर्षन् रावणपीडारहितप्रियाया आलिङ्गनेन वस्तुतो धन्योऽस्ति। मदनोन्मत्तं मां व्याकुलं दृष्ट्वाऽश्रुभिस्ते मातरम् (पृथिवीं) आर्द्रयन्त्यः शैलानपि स्वविलापेन रोदयन्त्यः (तत्र प्रतिध्वनिं कुर्वन्त्यः) आकाशस्था मेघमालाः प्रायो विलपन्तीव। मलयानिले देहस्पर्शम्, चन्द्रमसि त्वद्दृष्टिम्, लोके धाम्नोऽद्वैतम्, पृथिव्यामेकपर्यङ्कसंयोगम्, आकाशे च वितानस्य विस्तृतिं पश्यन् भाग्येन दूरस्थिताया अपि तवोपभोगेन मोदे। जलदापगमे सति निर्मलदिग्भागेयं शरत् त्वन्नयनतुल्यैर्विकसितकमलैरस्माकं विजययात्रा मुद्रा-

पयन्ती, सेनागमनानुकूलं मार्गं दर्शयन्ती त्वत्समीपं निनीषन् त्वरयति। अर्थान्मा भैषीः, अनुकूलसमयः समागतः, शीघ्रमेव त्वत्समीपमागमिष्यामीति।

## सीतासमाश्वासनम्

सन्देशं कथयन्नादौ हंसेन शिशिरवसन्तशरदृतुषु रामस्य विरहदैन्यं वर्णितम्, स शीघ्रमेव त्वत्समीपमाजिगमिषुरप्यस्तीत्येतदप्युक्तम्। कथं वा दुस्तरं सागरं तरिष्यति स इति न संदेग्धव्यम्, एष लक्ष्मणः शैलैर्न्नार्णैर्वा सेतुं बध्वा, वानराणां करे लङ्कां माल्यमिव कृत्वा, किञ्चिद्युद्धमपि कृत्वा चापध्वनिभिस्त्वामानन्दयिष्यति। तत्र च यथाशक्ति रावणशिरोगुच्छस्य छेदनाद् वैरे व्यपगते सति पुष्पकविमानेनायोध्यां गत्वा राज्याभिषेकानन्तरं चिरविरहकल्पितान् सर्वभोगानावां प्राप्स्यावः। अत एव भवती ममागमनमवश्यमेव प्रतीक्षतु, शरीरं तु रक्षणीयमेव। ब्रह्महत्यावसरे शच्याः प्रसिद्धं दुःखं ध्यात्वा, शिवविरहितां पार्वतीं च स्मृत्वा मे जीवनालम्बनमात्मानं कथमपि रक्षतु, यतो हि पत्युरुपच्छन्दाद् विरहिणीनां वधूनां विपत्तिरपि श्लाघनीया भवति।

## उपसंहारः

एवं सन्देशमुक्त्वा रामो हंसं कथयति यन्मया भवते निवेदितं तत्साहाय्यं भवद्भिः सम्यङ्मनसि निहितमिति मन्ये। यतो ह्यव्याजबन्धोर्भवतः स्वार्थनैरपेक्ष्यं जगति विश्रुतमेवास्ति। पुरापि भवत्कृतं नलसाहाय्यं वीक्ष्य शुद्धमनस्कानां भवतामार्तत्राणमेव व्रतमिति सर्वेऽवगच्छन्ति। एवं स्वमधुरैर्वचोभिः सीतायाः प्राणरक्षणं कृत्वा सूर्यवंशे मैत्रीं च वर्धयित्वा सर्वथाऽनुकूलया राजहंस्या सह यथेच्छं विचरतु विहरतु।

अनन्तरमेकेन श्लोकेन ग्रन्थसमाप्तिं कृत्वाऽन्तिमेन कविः स्वनामनिर्देशपूर्वकं ग्रन्थं प्रशंसति। समाप्तिश्चेत्थं कृता—एवं संदेशमुक्त्वा रामः सागरमुल्लङ्घ्य रावणे हते सीतां लब्ध्वा परां मुदमनुभवन् राज्यं स्वीकृत्यायोध्यां सनाथीकृतवानिति।

## सन्देशकाव्यानां प्रकरणेषु विभाजनम्

बहूनि सन्देशकाव्यानि सन्तीत्युक्तम्। एषु वर्णनसमये कश्चित् क्रमोऽपि स्वीक्रियते न वेति जिज्ञासा भवति। वस्तुतो येन क्रमेण मेघसन्देशः प्रचलति, प्रायः सर्वैरपि सन्देशकाव्यकर्तृभिः स एव क्रमः स्वीकृतः। शुकसन्देशस्य व्याख्यासु सन्देशकाव्यानां वर्णनक्रमो द्वादश-

प्रकरणेषु विभक्तो दृश्यते। तासु वरवर्णिनीनामव्याख्यायां द्वादशप्रकरणानामित्थं नामनिर्देशः कृतः[१]—

| | |
|---|---|
| १. आदिवाक्यम् | २. दौत्ययोजनम् |
| ३. व्रज्याङ्गदेशना | ४. प्राप्यदेशवर्णनम् |
| ५. मन्दिराभिज्ञापनम् | ६. प्रियसन्निवेशविमर्शनम् |
| ७. अन्यरूपतापत्तिसम्भावना | ८. अवस्थाविकल्पनानि |
| ९. वचनारम्भः | १०. सन्देशवचनम् |
| ११. अभिज्ञानदानम् | १२. प्रमेयपरिनिष्ठापनम्। |

अत्रेदं द्रष्टव्यमस्ति मेघसन्देशं हंससन्देशं चाधिकृत्यायं विभागः संगच्छते न वेति। वस्तुतो मेघसन्देशमेवाग्रे कृत्वा तैरिदं विभाजनं कृतमस्ति, अन्यथा तदप्रामाण्यं स्यात्।

## ( १ ) आदिवाक्यम्

परिचयात्मकं वाक्यमित्यर्थः। मेघसन्देशे 'कश्चित्कान्ताविरहगुरुणा' इत्यारभ्य 'कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे' इति त्रयः श्लोकाः। तेषु प्रथमेन प्रियाविरहितस्य यक्षस्य वर्णनम्, द्वितीयेन मेघदर्शनम्, तृतीयेन च यक्षचित्तान्यथावृत्तित्वगमनमुक्तम्। हंससन्देशेऽपि श्लोकत्रयात्मकमेवादिवाक्यम्। तत्राद्येन सीतान्वेषणे जागरूकस्य कामिनो रामस्य वर्णनम्, द्वितीयेन राजहंसदर्शनम्, तृतीयेन च तस्य चेतोविलयगमनं प्रतिपादितम्।

## (२) दौत्ययोजनम्

मेघसन्देशे चतुर्थश्लोकादारभ्य द्वादशश्लोकपर्यन्तं नवश्लोकात्मकं दौत्ययोजनमस्ति। तत्रैकेन कुटजकुसुमैर्मेघस्य सपर्यां कृत्वा कुशलक्षेमपिपृच्छावर्णनम्, कामार्ताश्चेतनाचेतनेषु प्रकृत्यैव कृपणा भवन्तीति न्यायाद् यक्षप्रवृत्तेर्युक्त्या संयोजनं द्वितीयेन, तृतीयेन मेघस्योच्चवंशीयत्वम्, चतुर्थेनालकां प्रति संदेशनयनप्रार्थनम्, पञ्चमेन मेघगमनेन यक्षातिरिक्तानामपि पथिकवनितानामाश्वासकथनम्, षष्ठेन शुभनिमित्तवर्णनम्, सप्तमेन सर्वथा प्रयाससाफल्यम्, अष्टमेन पथि भाविराजहंसकृतसाहाय्यम्, अन्तिमेन च प्रियसख्यू रामगिरिशैलस्यानुमतिग्रहणाय निवेदनमिति प्रतिपादितमस्ति। हंससन्देशे चतुर्थश्लोकमारभ्य पञ्चदशश्लोकान्तं दौत्ययोजनमस्ति।

---

१. 'Varavarṇinī' by E. Easwaran Nampoothiry, M. A., Journal of the Kerala University Oriental Manuscripts Library, Vol. XIV, No. 4.

तत्राद्येन संदेशदिदित्सया सरसिजदलै रामकृतहंससपर्यां वर्णयति। द्वितीयेन वार्तानभिज्ञे हंसे याञ्चादैन्यं स्पष्टीकरोति । तृतीयेन राजहंसस्य कुलीनत्वं वर्णयति । चतुर्मुखेनापि रुद्रस्य सारथित्वं स्वीकृतमासीदत आश्रितत्राणार्थं हंसेनापि दौत्यं स्वीकार्यमिति चतुर्थेनोक्तम् । कुतः ? रामस्यापि कुलीनत्वादिति पञ्चमेन प्रतिपादितम् । षष्ठेन दक्षिणदिशं गन्तव्यत्वेनोक्त्वा सप्तमेन शुभनिमित्तानि वर्णितवान् । अनन्तरं श्लोकत्रयेण मार्गे भाविन उपचारा उक्ताः, मार्गश्रमफलं सीतादर्शनमित्यनन्तरेण श्लोकेनोक्त्वाऽन्तिमेन प्रियायाः पद्मिन्या अनुमतिग्रहणमुक्तम् । एवं मेघहंससन्देशयोर्दौत्ययोजनमस्ति ।

## (३) व्रज्याङ्गदेशनाः

मार्गवर्णनमित्यर्थः । मेघसन्देशे त्रयोदशात् श्लोकादारभ्य त्रिषष्टितमश्लोकं यावत्, अर्थात् पूर्वमेघान्तं व्रज्याङ्गदेशनायाः क्षेत्रमस्ति । मार्गप्रस्ताव उत्तरदिगुड्डयनं च श्लोकद्वयेनोक्तम् । अनन्तरं मालक्षेत्रम् ( १।१६ ), आम्रकूटः ( १७, १८ ), रेवा ( १९, २० ), दशार्णः ( २३ ), विदिशा ( २४ ), वेत्रवती ( २४ ), नीचगिरिः ( २५ ), उज्जयिनी ( २७ ), निर्विन्ध्या ( २८, २९ ), अवन्ती ( ३० ), उज्जयिनी ( ३० ३८ ), गम्भीरा ( ४०, ४१ ), देवगिरिः ( ४२, ४४ ), चर्मण्वती ( ४५ ), दशपुरम् ( ४७ ), कुरुक्षेत्रम् ( ४८ ), सरस्वती ( ४९ ), गङ्गा ( ५०, ५२ ), हिमालयः ( ५२, ५७ ), कैलासः ( ५८, ६२ ), मानसरोवरः ( ६२ ), अलका ( ६३ ) इत्याख्यानि स्थानान्यस्यां कोटौ वर्णितानि । हंससन्देशे षोडशश्लोकादारभ्याश्वासान्तं यावद् मार्गवर्णनं वर्तते । तत्र माल्यवान् पर्वतः ( १६, १९ ), कर्णाटान्ध्रसीमा ( २० ), वेङ्कटाद्रिः ( २१, २२ ), कनकमुखरी नदी ( २३, २४ ), तुण्डीरमण्डलम् ( २५ ), सत्यव्रतक्षेत्रम् ( २५ ), काञ्ची ( २६, २९ ), वेगवती नदी ( २९, ३१ ), हस्तिशैलः ( ३१, ३५ ), चोलमण्डलम् ( ३६, ३७ ), श्वेताद्रिस्तत्स्थवनं च ( ३८, ४१ ), कावेरी ( ४२, ४३ ), चन्द्रपुष्करिणी ( ४४ ), श्रीरङ्गम् ( ४५, ४६ ), पाण्ड्यदेशः ( ४७, ४८ ), वृषभाचलः ( ४९, ५० ), ताम्रपर्णी ( ५१, ५२ ), सागरवेला ( ५३, ५४ ), सागरः ( ५५, ५६ ), सुवेलः ( ५७, ५९ ), लङ्का ( ६० ) इत्यादीनि व्रज्याङ्गदेशनायां क्रोडीभवन्ति ।

## (४) प्राप्यदेशवर्णनम्

इत्थमादिवाक्यदौत्ययोजनव्रज्याङ्गदेशनानां वर्णनं पूर्वमेघ एव कृतमस्ति । उत्तरमेघं प्राप्यदेशवर्णनमुखेनारभते । प्राप्यदेशो गन्तव्यस्थानमित्यर्थः । इत्थंभूतामलकामेकादशैः

श्लोकैर्वर्णयति । हंससन्देशेऽप्येवमेव प्रकरणत्रयाणां वर्णनं प्रथमाश्वासे कृतम् । द्वितीयाश्वासं प्राप्य-देशवर्णनेनारभते । अत्र प्राप्यदेशो लङ्कैवास्ति । सा च प्रथमश्लोकादारभ्य षष्ठश्लोकान्तं षड्भिः श्लोकैर्वर्णिता ।

## (५) मन्दिराभिज्ञापनम्

भवनस्याभिज्ञानमित्यर्थः । तच्च मेघदूते पञ्चभिः श्लोकैः कृतमस्ति । मन्दारवृक्षवापी-क्रीडाशैलरक्ताशोकवकुलमयूरादिभिर्लक्षणैर्गृहनिश्चयः कार्यः (२।१२,१६) इत्युक्तम् । हंससन्देशे त्रिभिः श्लोकैर्मन्दिराभिज्ञानं कृतमस्ति । तत्राशोकवनिकाशिंशुपादिभिः सीतायाः स्थितिकथनं (२।७,६) वर्तते । एवं मन्दिराभिज्ञापनमस्ति मेघहंससन्देशयोः ।

## (६) प्रियासन्निवेशविमर्शनम्

प्रियायाः सौन्दर्यवर्णनमित्यर्थः, मेघदूत एकेनैव श्लोकेनैतत् कृतमस्ति (२।१६) । हंससन्देशेऽपि तथैवैकेनैव सीतासौन्दर्यवर्णनं कृतमस्ति (२।१०) । द्वयोः प्रिययोः सौन्दर्यवर्णने साम्यमपि दृश्यते ।

## (७) अन्यरूपतापत्तिसम्भावना

विरहदुःखस्यासह्यत्वादन्यस्यैव कृशतादियुक्तस्य रूपस्य सम्भावना क्रियते । मेघदूते श्लोकद्वयेन (२।२१,२२) अन्यरूपतापत्तिसम्भावना कृताऽस्ति । हंससन्देशेऽन्यरूपतापत्ति सम्भावना यद्यपि तथा न दृश्यते, तथाऽपि श्लोकद्वयेनैतादृशी सम्भावना (२,११,१२) कृताऽस्तीति वक्तुं शक्यते ।

## (८) अवस्थाविकल्पनानि

तदानीं प्रेयसी कथं भविष्यतीत्येवं तस्या अवस्थानां विकल्पनानीत्यर्थो मेघदूते द्वादशैः श्लोकैः (२।२३-३४) यक्षः स्वप्रियाया अवस्थां विकल्पयति । हंससन्देशेऽपि रामः 'शुद्धामिन्दोः श्वपचभवने कौमुदीं विस्फुरन्तीम्' इत्यादिभिः सीताया अवस्थाविकल्पनं द्वादशैः श्लोकैः (२।१३-२४) करोति ।

## (९) वचनारम्भः

अत्र दूतः सन्देशमुपक्रमते । श्लोकत्रयेण (२।३५-३७) मेघदूते वचनारम्भः कृतोऽस्ति । हंससन्देशे चैतत्कार्यं श्लोकचतुष्टयेन (२।२७-३०) कृतमस्ति । उभयत्रापि प्रथमेन श्लोकेन

प्रेयसीं बोधयित्वा वचनोपक्रमः कार्यं इत्युक्तम्। द्वितीयेन पत्युः प्रणयसचिवत्वख्यापनम्, तृतीयेन च प्रणयसचिवत्वख्यापनस्य फलं वर्णितमस्ति। हंससन्देशे चतुर्थेनापि तदेवाह। अतीव साहश्यं दृश्यतेऽत्र मेघहंससन्देशयोः।

## (१०) सन्देशवचनम्

सन्देशकाव्यानामिदमेव हृदयमस्तीति वक्तुं सुतरां शक्यते। मेघदूत एकादशेषु श्लोकेषु ( २।३८।४८ ) मेघद्वारा यक्षः सन्देशं प्रेषयति। तत्राद्येन कुशलक्षेमप्रश्नः ( २।३८ ), अनन्तरं विविधप्रकृतिवस्तुषु प्रियाया एव दर्शनम् ( २।४१), तस्याः चित्रलेखनम् ( २।४२ ), स्वप्न आलिङ्गनम् ( २।४३ ), स्वदैन्यवर्णनम् ( २।४५ ), चक्रनेमिक्रमेण सुखदुःखयोर्गतित्वाद् मम ( यक्षस्य ) दुरवस्थां वीक्ष्य त्वया न भेतव्यमिति ( २।४६ ), दुःखमपि निरवधिकं नास्ति ( २।४७ ), गूढसन्देशश्च ( २।४८ ) इत्येतत् सर्वमपि संदेशकोटावायाति। हंससन्देशे पञ्चदशश्लोकैः सन्देशवर्णनं कृतमस्ति। तदित्थम्—कुशलक्षेमप्रश्नः (२।३१), विश्लेषेऽनुभूतशर्वरीवर्णनम् ( २।३३ ), शिशिरे रामावस्थावर्णनम् ( २।३४ ), वर्षाकालेऽनुभूतावस्था ( २।३५-३७ ), वर्षायामनुभूतावस्था ( २।३८-३६ ), विविधप्रकृतिवस्तुषु प्रियाया एव दर्शनम् ( २।४० ), शरत्कालीना स्थितिः (२।४१), तस्याः सर्वथा मत्सान्निध्यार्हत्वम् ( २।४२ ), सागरतरणविषयकसन्देहनिराकरणम् ( २।४३ ), आवयोः सम्मेलनमपि शीघ्रमेव भविष्यति ( २।४४,४५ ) इत्येतत्सर्वं सन्देशवचन एव क्रोडीभवति।

## (११) अभिज्ञानदानम्

सन्देशोपसंहारसमये यक्ष एवं निवेदयति--एतस्मात् संदेशरूपाभिज्ञानाद् मां कुशलिनं ज्ञात्वाऽऽत्मानं प्रति ममानुरागविषये भवती विश्वासिनी भवतु ( २।४६ ) इति मन्येऽत्र प्रयुक्तः 'अभिज्ञानदान'शब्द एव प्रकरणनामत्वेन लक्षणनिर्मातृभिः स्वीकृतः। अग्रिमेण श्लोकेन ( २।५० ) मेघमेवं सम्बोधयति—तस्या अपि साभिज्ञानकुशलवचनैर्ममापि जीवनरक्षा कार्या। इत्थमयमर्थः प्रतिभाति प्रियेण प्रियायै सन्देशरूपाभिज्ञानदानम्—प्रियया च प्रियायाभिज्ञानदानमिति। यद्यपि हंससंदेशे शब्दतोऽभिज्ञानदानादिर्नास्त्येव, तथापि 'शच्याः क्लेशं क्वचन समये' ( २।४६ ) इति श्लोकोऽभिज्ञानदान एवान्तर्भवति। तस्यायमर्थः—मत्संदेशं सम्यक्तयाभिज्ञाय शच्यादिवद्दुःखमेतत् सोढव्यं येनावयोर्जीवनलाभः सम्भवेत्।

## (१२) प्रमेयपरिनिष्ठापनम्

प्रमेयस्य परिनिष्ठापनमुपसंहारः। मेघदूते श्लोकद्वयाभ्यां प्रमेयस्य परिनिष्ठापनं कृतमस्ति। तत्र प्रथमेन "यन्मया भवते निवेदितं तद् भवता सम्यगवधारितं वा" इति मेघदूतं पृच्छति (२।५१), अन्तिमेन च मेघस्यानुनयादिकं कृत्वा ग्रन्थं समापयति (२।५५), हंससन्देशे च श्लोकचतुष्टयेन प्रमेयं परिनिष्ठापयति। तत्राद्येन निवेदितसन्देशः सम्यग् व्यवसितो न वेति रामो हंसं पृच्छति। द्वितीयेन हंसस्यानुनयादिकं करोति। तृतीयेन राम एवं हंसं सन्दिश्य यथावदभियानादिकं कृत्वानन्तरं राजधानीमलञ्चकारेत्युक्तम्। अन्तिमेन च कविः स्वनामनिर्देशपूर्वकं ग्रन्थस्य विद्वत्कटाक्षार्हत्वं प्रतिपादयति।

एवं प्रकरणविभागस्य हंसमेघसंदेशेऽधिकृत्य परीक्षा कृता। यद्यपि कः श्लोकः कुत्र क्रोडीभवतीति यथाशक्ति विचारितम्; तथापि तेन तेन श्लोकेन तत्र तत्रैव भाव्यमित्यत्र संदेहि। अत्रेदं विचार्यम्—किं दूतकाव्यलक्षणत्वेनायं विभागः स्वीकर्तुं शक्यते न वेति। यद्यपि यत्र यत्रायं विभागस्तत्र तत्र दूतकाव्यत्वमिति शक्यते वक्तुम्, तथापि व्यतिरेकेण तु नैव सम्भवति, पान्थदूते व्रज्याङ्गदेशनावदन्येष्वपि तस्य तस्य प्रकरणस्यासद्भावात्, तेषां दूतकाव्यत्वेन प्रसिद्धेश्च। अतो यत्रायं विभागस्तत्र दूतकाव्यत्वमस्तीति सत्यम्, किन्तु यत्र नास्ति तत्र दूतकाव्यत्वमपि नास्तीत्यसम्बद्धम्।

## हंससन्देशस्य महाकाव्यत्वम्

मैसूर-ओरियन्टल-रिसर्च-इन्स्टीट्यूटतः प्रकाशितस्य श्रीब्रह्मतन्त्रपरकालस्वामिकृतव्याख्यायुतस्य हंससन्देशस्य प्रथमाश्वासान्त एवं लिखितमस्ति 'इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु हंससन्देशे महाकाव्ये प्रथम आश्वासः'। एवमेव द्वितीयाश्वासान्तेऽपि 'इति श्रीकवितार्किकसिंहस्य हंससन्देशे महाकाव्ये द्वितीय आश्वासः'। अत्रोक्तमहाकाव्यत्वं श्रीस्वामिपादैः स्वव्याख्यायां साधितमस्ति। ते तत्रैतल्लक्षणमुदाहरन्ति—

नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम्। उद्यानसलिलक्रीडामधुपानरतोत्सवैः॥ विप्रलम्भविवाहैश्च कुमारोदयवर्णनैः। मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि॥ अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम्। सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः॥ सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम्। काव्यं कल्पान्तरस्थायि कल्पतेऽन्यभूतये (?)॥ महाकाव्यमिदं प्रोक्तं मुनिभिः काव्यवेदिभिः। यत्किञ्चिद्वर्णनन्यूनमपि काव्यं महद्विदुः॥

समग्रस्याप्यस्य लक्षणस्य हंससन्देशे सद्भावाद् महाकाव्यमेवैतदिति तैः समीचीनतयोदाहरणादिभिः साधितम्। द्यूतस्य वर्णनं यद्यपि नास्ति, तथापि 'यत्किञ्चद्वर्णनन्यूनमपि काव्यं महद्विदुः' इति न्यायान्न काचिदपि हानिः। एतत्तु विचित्रमेव प्रतिभाति यन्मेघदूतं तु खण्डकाव्यमेव, किन्तु तच्छायायां लिखितं हंससन्देशकाव्यं महाकाव्यमिति। यद्यप्याकारादिदृष्ट्या द्वयोः काव्ययोर्मध्ये सर्वथा साम्यमेव दृश्यते, तथापि कश्चिद् भेदस्त्वस्त्येव। महाकाव्यस्य नायकलक्षणमित्थमस्ति—

......................तत्रैको नायकः सुरः॥
सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः[१]।

नायकदृष्ट्या हंसमेघसन्देशयोर्मध्ये महान् भेदोऽस्ति। हंससन्देशे 'वंशे जातः सवितुरनघे', 'देवश्श्रीमान्' इत्यादिभी रामस्योत्तमनायकत्वं धीरोदात्तगुणान्वितत्वं च व्यज्यते। देवत्वं क्षत्रियत्वं च साक्षादुक्तमेव। 'कश्चित्कान्ताविरहगुरुणा' इत्यत्र कश्चिच्छब्दवाच्यो मेघसन्देशनायकः सर्वथाऽप्रसिद्ध एव। अत एव स महाकाव्यनायकत्वेऽनर्होऽस्ति। कथावस्तुदृष्ट्याऽपि हंससन्देशस्य महाकाव्यत्वं पुष्टं भवति। तच्चैवमुक्तम्—

इतिहासोद्भवं वृत्तमन्यद् वा सज्जनाश्रयम्॥[२]

हंससन्देशस्य कथावस्त्वपि मुख्यत इतिहासोद्भवमस्ति, रामायणमहाभारतयोरैतिहासिकत्वात्। मेघदूतस्येतिवृत्तं सर्वथा काल्पनिकमस्ति। अतो मेघदूते महाकाव्यत्वं लेशतोऽपि नास्ति। हंससन्देशे यद्यपि महाकाव्यस्य मुख्यलक्षणानि सन्ति, तथाऽप्यस्य लघ्वाकारत्वम्, कथैकदेशत्वम्, द्वयोराश्वासयोर्विभाजनं[3] च वीक्ष्य नैतन्महाकाव्यम्, खण्डकाव्यमेवेदमिति निश्चीयते।

## अत्र रसादिः

अत्र शृङ्गाररस एव प्रधानतया विद्यते। रसार्णवसुधाकरेऽयं रस एवं वर्णितः—

---

१. साहित्यदर्पणः ६,३,५,३।६।

२. साहित्यदर्पणः ६,३।८।

३. महाकाव्यं सर्गेषु विभाजितं भवति, न त्वाश्वासयोः। यथोक्तम्—'सर्गबन्धो महाकाव्यम्' ( सा० द० ६-३।५ )। प्राकृतमहाकाव्येषु विभाजनमाश्वासेषु भवति—'प्राकृतैर्निर्मिते तस्मिन् सर्गा आश्वाससंज्ञकाः' ( सा० द० ६-३,२८ ) अष्टाधिकैः सर्गैरेव भाव्यम्—'सर्गा अष्टाधिका इह' ( सा० द० ६-३।२१ )।

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
नीता सदस्यरस्यत्वं रतिः शृङ्गार उच्यते ॥
स विप्रलम्भः सम्भोग इति द्वेधा निगद्यते ।
अयुक्तयोस्तरुणयोर्योऽनुरागः परस्परम् ॥
अभीष्टालिङ्गनादीनामनवाप्तौ प्रकृष्यते ।
स विप्रलम्भो विज्ञेयः स चतुर्धा निगद्यते ॥
पूर्वानुरागमानौ च प्रवासकरुणाविति ।

एवं शृङ्गारो द्विधा विभज्यते—विप्रलम्भशृङ्गारः सम्भोगशृङ्गारश्चेति । विप्रलम्भशृङ्गारश्चतुर्धा विभज्यते, पूर्वानुरागमानप्रवासकरुणभेदात् । अत्रास्मिन् काव्ये प्रवासविप्रलम्भशृङ्गारो वर्तते । किमिति प्रवासो नामेति तत्रैव प्रतिपादितम्—

पूर्वसङ्गतयोरेव यूनोर्देशान्तरादिभिः ।
रमणव्यवधानं चेत् स प्रवास इतीरितः ॥

अतः सीतारामयोः पूर्वसंश्लिष्टयोरिदानीं देशान्तरकृतरमणव्यवधानादत्र प्रवासविप्रलम्भशृङ्गार एवाभिमतः । गुणेषु च माधुर्यप्रसादयोरेव मुख्यतः स्थितिस्तत्र तत्र दृश्यते ।

## सम्प्रदायः

श्रीवैष्णवसम्प्रदायमेवानुसृत्य प्रचलत्येतद्धंससन्देशकाव्यम् । श्रीवैष्णवदिव्यदेशानां परमश्रद्धया वर्णनं दृश्यते । प्रथमं तावद्वेङ्कटाचलस्य वर्णनं कृतमस्ति । सम्प्रति विद्यमानेषु वैष्णवदिव्यदेशेषु "तिरुपतितिरुमलै" इत्याख्याया वेङ्कटाचलेतिनामान्तराया भगवत्सन्निधेरनन्यतमं स्थानं वर्तते । तदनन्तरं तुण्डीरमण्डलस्य, चोलमण्डलस्य, पाण्ड्यदेशस्य च वर्णनम्, तत्रापि प्रसिद्धकाञ्चीश्रीरङ्गमादिदिव्यदेशेषु प्रीतिः कवेः श्रीवैष्णवत्वं सुतरां द्योतयति ।

नदीनां वर्णनमपि श्रीवैष्णवसम्प्रदायानुसारमेवेति प्रतिभाति । कावेरीनद्याः शाखाद्वयं श्रीरङ्गभगवतां श्रीरङ्गपट्टणक्षेत्रमुभयतः प्रवहति । तथैव तेषामेव भगवतां श्रीरङ्गक्षेत्रमुभयतः प्रवहति, तस्या एव शाखाद्वयम् । तञ्जावुरस्थानेऽपि बहवो दिव्यदेशाः सन्ति । तत्रापि कावेरी नदी प्रवहति । एवं बहून् दिव्यदेशानियं नदी स्पृशति । ताम्रपर्णी नद्यपि महत्त्वपूर्णाऽस्ति । तस्यास्तट एव भगवद्भक्ता घोरकलियुगे स्थास्यन्तीति शास्त्रेषु लिखितमस्ति ।

देवतान्तरसम्बन्धो मा भूदिति श्रीवैष्णवसम्प्रदायः। हंसं रामः सन्दिशति यद् वृषभाचले दिव्यगङ्गायाः सद्भावात् तस्याश्च पशुपतिजटासम्बन्धाद् भगवतो दिव्यं पाथः प्रकाशते। एवं सर्वथा कविः स्वस्य श्रीवैष्णवत्वमुद्घोषयति।

अत्र डा० सत्यव्रतसिंहमहोदया एवं वदन्ति[१] यदस्मिन् काव्ये सीतारामयोः स्थितिर्जीव-परमात्मनोरस्ति। हंसश्च गुरुत्वेन वर्तते।

**अत्र सूक्तयः**

१. शङ्के तीव्रं भवति समये शासनं मीनकेतोः।

२. कान्ताश्लेषादधिकसुभगः कामिनां दूतलाभः।

३. याच्ञा दैन्यं भवति किमुत क्वापि संवेदनार्हे।

४. शब्दायन्ते न खलु कवयः सन्निधौ दुर्जनानाम्।

५. नालम्बन्ते कथमिव दयां निर्मलत्वोपपन्नाः।

६. किं न स्त्रीणां जनयति मुदं कान्तवार्तागमोऽपि।

७. पत्युश्छन्दाद् व्यसनमपि श्लाघनीयं वधूनाम्[२]।

इत्थं काव्यमिदमवलोक्य कवेः कवितार्किकसिंहाद्युपाधिजातमनुगुणमेव प्रतिभाति। अतोऽत्राप्पयदीक्षितोक्तिं पुनः स्मारयद्भिर्विरम्यतेऽस्माभिः —

इत्थं विचिन्त्या सर्वत्र भावाः सन्ति पदे पदे।
कवितार्किकसिंहस्य काव्येषु ललितेष्वपि ॥[3]

---

१. Ved inta Deśika, A Study of His Life, Work and Philosophy.
The Haṁsa-Sandeśa presents Rāma as the lover, languishing in separation from Sītā the beloved. Rāma and Sītā symbolize God and God-mad soul. The Haṁsa stands for the poet or the seer or the saint who can carry the message of God, the love to the Soul, the beloved and work selflessly for the Union of the lovers, pining in separation caused by cruel and wicked Rāvaṇa of Saṁsara.

२. हंससन्देशः १-३,४,५,४७; २-२४,३०,४६।

३. यादवाभ्युदयटीकायाम्।

# समासोक्तिसमासशक्त्योः समता

श्रीब्रजनाथझा, अन्ताराष्ट्रियविभागेऽध्यापकः, वा० सं० वि० वि०, वाराणसी ।

शब्दशास्त्रे समसनशब्दस्यैकस्यां वृत्तावन्तर्भाव इत्यर्थो लभ्यते, स चात्र द्वयोर्बहूनां वा पदानामेकत्र निक्षेपरूप एव । समुपसर्गाद् घञन्तस्यासेरर्थः पदयोः पदानां वा स्वार्थानामेकार्थे समासात् कथनमेव । तदेव समसनं समास इति । इत्थमेव साहित्यशास्त्रेऽपि समसनशब्दस्य सक्षेपार्थकथनमेवार्थः । अत्र क्रियते यः समासेनार्थः स वाच्यव्यङ्ग्याभ्यां भिन्न एव । भवति तस्य भिन्नैव काचिच्छक्तिः । तदित्थमनयोः प्रस्तूयन्ते कानिचित् साम्यमाधारीकृत्य पर्यालोचनानि ।

व्याकरणे पदसम्बन्धी विधिः समर्थाश्रितो भवति । एवं च पदयोः पदानां वा एकत्राश्रयणे तत्रैका शक्ति( सामर्थ्यम् )रापतति । अर्थाद् व्यस्तेषु पदेषु यत्सामर्थ्यं वर्तते तत्तेषां समर्थाश्रिते नाधितिष्ठति । तत्रागच्छति काचिदपरा शक्तिः । इयमेव समासशक्तिरिति कथ्यते । तदुक्तम्—'समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्' इति । समर्थितेयमस्ति शक्तिर्बहुधा नागेशकौण्डभट्टाभ्याम् । प्रसङ्गेऽस्मिन् शाब्दिका मीमांसक-नैयायिकयोः सर्वथा खण्डनं जगुः ।

प्रतिपादनीयमस्तीदमेव यद् वृत्तौ शक्तिर्भवति या सैव समासशक्तिः । अत्रैव सामर्थ्यम्। अत्रार्थशब्दस्यार्थो द्विविधः—प्रयोजनम् , अभिधेयश्च । तत्र प्रथमपक्षे समर्थस्यार्थोऽभिप्रायबोधनं प्रति तुल्यप्रयोजनवानिति भवति । इदमेव व्यपेक्षारूपसामर्थ्यमिति निगद्यते, यथा 'राज्ञः पुरुषः' इत्यत्र 'राज्ञः' इति शब्दो राजसम्बन्धिपुरुषम्, 'पुरुषः' इति शब्दश्च राजानं प्रतिपादयतः । द्वावप्यत्राभिप्रायबोधनं प्रति तुल्यप्रयोजनवन्तावेव ।

द्वितीयपक्षे समर्थशब्देऽर्थशब्दस्यार्थोऽभिधेयः । समित्यव्ययस्यार्थः संसृष्टः । एवं च यस्मिन्नियमेऽर्थोऽभिधेयः संसृष्ट एको भवति, सा एकार्थीभावरूपा शक्तिः । इयं च जायते वृत्तावेव। 'राजपुरुषः' इति वृत्तौ राजन्शब्दस्य पुरुषशब्दस्य चार्थः संसृष्टः । संसृष्टे च तस्मिन् तत्रोत्पद्यते संसर्गः । जाते च संसर्गे जायते तत्रैकार्थीभावरूपं[1] सामर्थ्यम् । सैवेह समासशक्तिरिति

---

१. "अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्यः"—महाभाष्यम् ।

कथ्यते । जातायामेवं वृत्तौ जायेते प्रातिपदिकसंज्ञा पदसंज्ञा च । वृत्तिरियं द्विविधा—जहत्स्वार्था, अजहत्स्वार्था च । तत्र जहति पदानि स्वार्थं यस्यामिति विग्रहे रथन्तरशब्दे शुश्रूषाशब्दे च जहत्स्वार्था वृत्तिः, न जहति पदानि स्वार्थं यस्यामित्यर्थे राजपुरुषशब्दे समुदायेऽवयवे च शक्त्भानेऽजहत्स्वार्था वृत्तिः । इत्थमत्र शाब्दिका वृत्तावेकार्थीभाव रूपंसामर्थ्यं मन्वानाः समासे शक्तिमनुमोदन्ते ।

अत एव पङ्कजशब्दे समासे शक्तिं स्वीकुर्वता भर्तृहरिणा 'समासे खलु भिन्नैव शक्तिः' इत्युक्तम् । समुदाये शक्तिं मन्वान एव वाक्यपदीयकारः शब्दान् चतुर्विधान् स्वीकरोति—रूढः, योगरूढः, यौगिकः, यौगिकरूढश्च[1] ।

अथ च व्यपेक्षासामर्थ्ये शक्तिस्वीकारे 'घटपटौ' इति शब्दे यो घटश्च पटश्चेति विग्रहस्तत्र चकारस्य समुदायशक्तिद्योतकत्वाभावान्नकारात्मकोऽर्थः सम्पद्येत[2] । अतः सर्वथा साहित्यावच्छिन्ने एव शक्तिरिति शाब्दिकाः । सैव समासशक्तिरिति कथ्यते ।

साहित्यशास्त्रे समासोक्तेरलङ्कारस्यापीदमेव वैशिष्ट्यं वर्तते यदसावपि संक्षेपवचनादेव जायते । तदुक्तं वामनेन[3]—"उपमेयस्यानुक्तौ समासवस्तुन्यासः समासोक्तिः, संक्षेपवचनात् समासोक्तिरित्याख्या" इति । अमुमेव स्वारस्यमग्रेतनाः काव्यलक्षणकोविदाः शब्दान्तरेणाहुर्यद्—यत्र प्रकृतार्थप्रतिपादकवाक्यादप्रकृतार्थार्थस्याभिधानं जायते तत्र समासोक्तिर्भवति । सातत्येऽस्मिन् विवदतामनेकेषां मध्ये केवलं पञ्चषाणामेव मतानि प्रस्तूयन्तेऽत्र निबन्धे ।

रीतिवादी वामनोऽलङ्कारमेव वस्तुतः काव्यग्राह्यं मन्वानस्तत्संक्षेपवचनं समासोक्तिमनुते—यत्रोपमेयमन्तरेणैव वाक्यार्थविन्यासो जायते । कोविदोऽसौ मरौ करीरस्य स्थिति-

---

१. अवयवार्थमनपेक्ष्य समुदायशक्तिमात्रेणार्थबोधकत्वं रूढत्वम् ।
अवयवार्थसंवलितसमुदायशक्त्याऽर्थबोधकत्वं योगरूढत्वम् ।
अवयवशक्त्यैवार्थबोधकत्वं यौगिकत्वम् ।
अवयवशक्त्या समुदायशक्त्या चार्थबोधकत्वं यौगिकरूढत्वम् ।

२. चकारादिनिषेधोऽथ बहुव्युत्पत्तिभाननम् ।
कर्तव्यन्ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः ॥

३. काव्यालङ्कारसूत्रवृत्तौ ।

मादरणीयां मन्वानो मेरौ कल्पवृक्षस्य शोभां धिक्करोति[१]। वाक्येऽस्मिन् या शक्तिः सा भिन्नैव काचित् पङ्कजशब्दवत्।

मम्मटस्यापि 'परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः' इति लक्षणे मूलतः संक्षेपकथनमेव समासोक्तिरिति व्यज्यते, परन्तु तत्र केचित् शब्दा व्याख्येयाः सन्ति। पर इति शब्दस्य अप्रकृतव्यवहार इति, 'उक्तिः' इति शब्दस्य बोद्धव्यविषयः, अर्थाद् व्यञ्जनया बोद्धव्यार्थस्य प्रतिपादनमिति, 'भेदकः' इत्यस्य प्रकार इति, 'श्लिष्टः' इत्यस्य श्लेषयुक्त इति, समास इत्यस्य संक्षेप इत्यर्थो जायते। तथा ह्यनेकार्थकविशेषणपदैर्यत्र संक्षेपेणाप्रकृतव्यवहारस्य व्यञ्जनया बोधनं कथनं वा भवति, तत्र समासोक्तिरलङ्कारो जायते।

यथा [२]निम्नोद्धृतोदाहरणे जयलक्ष्मीवृत्तान्तो नायिकावृत्तान्तरूपेऽप्रकृतमर्थमापादयति। उदाहरणेऽस्मिन् सुधासागरकारानुसारं कस्याश्चिद्वीरपत्न्याः महेश्वरानुसारं विजयिनृपतिं प्रति कस्याश्चिदुक्तिः। इत्थमत्रापि संक्षेपोक्तिरेव समासोक्तिरिति।

विश्वनाथमतेऽपि समैः कार्यलिङ्गविशेषणैः प्रकृतेऽप्रकृतस्य व्यवहारसमारोपः समासोक्तिः सर्वथा संक्षेपोक्तिमेव प्रतिपादयति[३], यतो हि भवत्यत्रापि शब्दे एकस्मिन्नेव नानार्थानां समारोपः। यथाऽभिनवभारत्या उद्धृते निम्नाङ्कितोदाहरणे[४] रविसंध्ययोः पुल्लिङ्गस्त्रीलिङ्गज्ञानमात्रेणैव तत्र समारोपितनायकनायिकाव्यवहारः समासोक्तिं सर्वथा पुष्णाति। इत्थमत्रापि संक्षेपार्थकथनमेव समासोक्तिमावेदयति। तदिदमित्थमावेद्यते चित्रद्वारा—

---

१. श्लाघ्या ध्वस्ताध्वगग्लानेः करीरस्य मरौ स्थितिः।
धिङ्मेरौ कल्पवृक्षाणामनुत्पन्नार्थिनां श्रियः॥

२. लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः।
जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा॥

३. समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः।
व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥

४. असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः।
अनाक्रम्य जगत् कृत्स्नं नो सन्ध्यां भजते रविः॥




इत्थमत्र लोचनकारोऽपि—

यत्रोक्तौ गम्यतेऽन्योर्थस्तत्समानैर्विशेषणैः ।
सा समासोक्तिरुदिता संक्षिप्तार्थतया बुधैः ॥

इत्युक्त्वा वस्तुतः संक्षिप्तोक्तिमेव मनुते समासोक्तिम् ।

अत्रैकः प्रश्नः समुदेति ध्वन्यालोके यदसावलङ्कारोऽन्तर्भवति ध्वनौ भिन्नो वा ध्वनेरयमिति । तदित्थं यद् यत्र प्रतीयमानार्थस्य वैशद्येन प्रतीतिर्भवति तत्र ध्वनिर्भवति, तदात्रापि समासोक्तौ प्रतीयमानार्थस्यैव वैशद्येन प्रतीतेरनेनापि ध्वनिनैव भाव्यं नालङ्कारेणेति । अत्राहानन्दवर्धनो यत्—समासोक्तौ न भवति स्वार्थो गौणः, यत्र ध्वनौ गौणः स्वार्थो व्यङ्ग्यप्राधान्यं च दृश्येते[1] । यथोद्धरिताधोलिखितोदाहरणे[2] व्यङ्ग्येनानुगतं वाच्यमेव सर्वथा चारुतामावहति, समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वात् ।

पुनरेकः प्रश्नः प्रसङ्गेऽस्मिन् परापतति यत् कथङ्कारं शक्त्युक्त्योः समता समासाद्यते ? उक्तौ शक्तिर्भवति, न तु शक्तिरेवोक्तिः ? तथा हि भवेन्नाम समासोक्तौ शक्तिः, अथ चास्तु

---

१. व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः ।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः ॥

२. उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम् ॥

नाम समासे शक्तिः, परन्तु नैव भवितुं शक्नोति समासोक्तिः समासशक्तिरिव । तत्रोच्यते यत्र कृतास्ति मयात्र शक्त्युक्त्योः समतायास्तुलनाऽपि तूभयत्र समासेनोक्तोक्तेरेव । उभयत्रोक्तौ शक्तिर्वर्तत एव । एकत्र समासेनोक्तेऽर्थे एकार्थीभावरूपा शक्तिः, अपरत्र समासेनोक्तेऽर्थे व्यञ्जनयाऽनेकार्थीभावरूपा शक्तिः । समासशब्दस्य समसनमेवार्थ उभयत्र । तच्च संक्षेपार्थकथनमेव । तदिहोभयत्र संक्षेपार्थकथने एव शक्तिर्भवति । इत्थमत्र समासशक्तिसमासोक्त्योः समता सम्भाव्यत एव ।

अपि चात्रेदमवधेयम्—यद् यस्याः शक्तेश्चर्चा चर्च्यतेऽत्र सा शब्दस्यैकस्य शक्तिमधिकृत्य न चर्च्यते अपि तु शब्दयोः शब्दानां वा समूहस्य शक्तिमधिकृत्य क्रियते । 'राजपुरुषः' इत्यादौ समासे शब्दयोः समूहेन या काचिच्छक्तिर्जायते तत्र शक्तिः स्वीक्रियते । एवं काव्ये समस्तवाक्यस्योक्तौ शक्तिः स्वीक्रियते । अतः शक्तिरियं कस्याश्चिदुक्तौ विचार्यते, न तु शब्दे । एतेनोभयत्रोक्तावेव शक्तिः साध्यते । इत्थमत्रोभयत्रोक्तौ शक्तिं विचार्य उभयोः साम्यमासाद्यते । तदित्थं नैव करणीयास्ति चर्चेदृशी यत्समासे शब्दे शक्तिः समासोक्तौ चोक्तौ शक्तिरिति द्विविधा गतिरनयोरापतति शक्तिविचारणायां येन समता न समासादनीया स्यादिति । एवमत्र समासेन या उक्तिः समासोक्त्या च या उक्तिस्ते उभे अपि समाने भवत एव । तदिदमत्राप्रस्तूयत कियत्स्वंशेष्वेव साम्यमनयोः समासशक्तिसमासोक्त्योरिति ।

दृश्यतां कार्यसाम्येन गन्धवाहे हठकामुकव्यवहारः समासोक्त्या दर्पणकारस्य—

व्याधूय यद्वसनमम्बुजलोचनाया
वक्षोजयोः कनककुम्भविलासभाजोः ।
आलिङ्गसि प्रसभमङ्गमशेषमस्या
धन्यस्त्वमेव मलयानल गन्धवाह ॥

# शङ्कुकरसदर्शनपरिशीलनम्

श्रीउमाशङ्करमिश्रः, साहित्यविभागाध्यक्षः, ऋषिकुलविद्यापीठम्, हरिद्वारम् ।

सर्वज्ञवदनाम्भोजविलासकलहंसिकाम् ।
विशुद्धपक्षद्वितयां देवीं वाचमुपास्महे ॥
कान् पृच्छामः सुराः स्वर्गे निवसामो वयं भुवि ।
किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ॥
संगीतमथ साहित्यं सरस्वत्याः स्तनद्वयम् ।
एकमापातमधुरमन्यदालोचनाऽमृतम् ॥

## ऐतिहासिको विमर्शः

रसतत्त्वचिन्तनातिनिचितचितयो विमलमतयो मतिमन्तो रससमीक्षका विदन्त्येव यदभिनवगुप्तपादाचार्यप्रणीताऽभिनवभारत्यामुपलभ्यमानेषु "विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" ( अभि० भा०, गा० वा० सं०, पृ० २७३ ) इति महामुनिभरतोपस्थापितरससूत्र-विवेचकेषु भट्टलोल्लटाचार्यमतविवेचनान्तरमैतिहासिककालक्रमानुसारं धर्मकीर्तिमतानुयायी बौद्ध-नैयायिको रसानुमितिवादसमुद्भावको द्वितीयस्तावद्रसतत्त्वविमर्शकः श्रीशङ्कुक इति सुप्रथित-नामाभिधेयोऽभिनवरसचिन्तकोऽस्माकं दृष्टिपथमवतरति ।

अपि च—

कविर्बुधमनःसिन्धुः शशाङ्कः शङ्कुकाभिधः ।
यमुद्दिश्याकरोत् काव्यं भुवनाभ्युदयाभिधम् ॥
( राज० ४।७०४ )

इत्यजितापीडनामाभिधेयस्य राज्ञो वर्णनप्रसङ्गे राजतरङ्गिण्यां महता समादरेण श्रीशङ्कुक-नामसङ्कीर्तनेनाऽयमजितापीडराज्ञः समकालीन इत्यैतिहासिकपर्यालोचनयाऽस्माभिरवगम्यते ।

अत एव पूर्वोक्तप्रमाणसमवलम्बनेनाऽजितापीडराजा खिस्ताब्दोत्तरनवमशतकस्यादौ समभवदिति सर्वतोभावेन सर्वाभिमतं निर्विवादमिति पुरातत्त्वविशारदा आमनन्ति ।

नैकेषु स्थलेष्वभिनवभारत्यां[1] श्रीशङ्कुकमतोपन्यासः समुपलभ्यत इति नातिरोहितं रससारविदामालङ्कारिकाणाम्। परमार्थतो भट्टलोल्लटरससूत्रव्याख्याने स्थायिन इत्याध्याहारेण "विभावादिभिः संयोगाद् अर्थात् स्थायिनः" इति व्याख्यानाऽनुसारम्, अनुपचितः स्थायीभावः, उपचितो रसः, अथ चानुकार्ये रामादावेव रसनिष्पत्त्या सामाजिकेषु रसनिष्पत्त्यभावात्, सामाजिकानां चमत्कारानापत्तिरित्याद्यपसिद्धान्तत्वमवधार्य श्रीशङ्कुकरसदर्शनं प्रवर्तते। यतो हि सहृदयनिष्ठचर्वणामन्तरा महामुनिभरताचार्यप्रणीतरससूत्रस्य व्याख्यानमेव न सम्भवति। काव्याभिनयेषु सामाजिकेषु रसनिष्पत्त्यभावेन सामाजिकानां रसानुभवस्य सर्वात्मना शशशृङ्गाय-माणत्वं सुतरामायाति। किं बहुना, आनन्दाभावे च—

"कवेस्तावत् कीर्त्याऽपि प्रीतिरेव सम्पाद्या। श्रोतॄणां च व्युत्पत्तिर्यद्यप्यस्ति, तथापि प्रीतिरेव प्रधानम्। अन्यथा प्रभुसम्मितेभ्यो वेदादिभ्यो मित्रसम्मितेभ्यश्चेतिहासादिभ्यो व्युत्पत्तिहेतुभ्यः कोऽस्य काव्यरूपस्य जायासम्मितत्वलक्षणो विशेष इति···चतुर्वर्गव्युत्पत्तेरपि चानन्द एव पार्यन्तिकं मुख्यं प्रयोजनम्" (ध्वा० लो०, पृ० १२)।

इत्यानन्दवर्धनाचार्यप्रतिष्ठापितं काव्यस्य आनन्द एव पार्यन्तिकं मुख्यं प्रयोजनमिति सिद्धान्तमपि सर्वात्मनाऽसङ्गतं स्यात्। किञ्च, पाश्चात्त्यरसतत्त्वावगाहनचणा रसविमर्शकाः सामाजिकरसानुभवस्य परमापेक्षितत्वं रसचर्वणायामिति समुद्घोषयन्ति। आहुश्चात्र श्रीजान-ड्राइडन-महाशयाः—

"Delight is the chief, if not the only end of poetry instruction can be admitted but in the second place, for paesy only instructs as it delights."

तत्र संक्षेपेण श्रीशङ्कुकरससिद्धान्तस्याऽयमभिप्रायः—नाटकेषु स्थायिभावानामुपस्थिति-रभिनयेनैव सञ्जायते। अभिनयश्चानुकरणात्मको भवतीति निर्विवादम्। अतश्चानुपचितः स्थायीभावः, उपचितो रस इति न विचारपेशलम्; प्रत्युत अनुक्रियमाणः स्थायिभाव एव रस इति श्रीशङ्कुकरसदर्शनरहस्यम्।

---

१. अभि० भा०, भा० १, गा० वा० सं०, पृ० ७४, २१७, २७४, २८५, २९३, २९८, ३१८; भा० २, पृ० ४११, ४३६। एवं च श्री एस० के० डे० महाशयस्य पाण्डुलिप्याम्, पृ० ४०३, ४१३, ४३७, ४४४, ४४८, ४६९।

अत एव "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति सूत्रे मुनिना भिन्नविभक्तिकमपि स्थायिपदं नोक्तम्। अत एवाहुरभिनवगुप्तपादाचार्याः—"तेन रतिरनुक्रियमाणा शृङ्गार इति तदात्मकत्वं तत्प्रभवत्वं च युक्तम्" (अभि० भा० १, पृ० २७३, गा० वा० सं०) इति।

## श्रीशङ्कुकस्य रससूत्रविश्लेषणप्रकारः

श्रीशङ्कुकस्य रसानुमितिवादो धर्मकीर्तेर्बौद्धदर्शनेन सर्वात्मनाऽनुप्राणितो वर्तत इति तदीयरसचिन्तनप्रकारस्य सूक्ष्मेक्षिकया विश्लेषणेनाक्षिलक्षीक्रियते सहृदयधुरीणैः सुधीवरैरिति नाविदितं सरस्वतीसुधारसास्वादमुदितमनसां रससिद्धान्तविमर्शशीलानाम्। श्रीशङ्कुकेन स्वकीयाऽनुमितिवादरसदर्शने भट्टलोल्लटस्योत्पाद्योत्पादकगम्यगमकपोष्यपोषकरूपसम्बन्धत्रयमपहाय अनुमाप्यानुमापकभावरूप एक एव सम्बन्ध उररीकृतः। वस्तुतोऽस्मिन् रसदर्शने "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति मुनिसूत्रस्थ 'निष्पत्ति' पदस्य न चोत्पत्तिरर्थः, न वाऽभिव्यक्तिः, न च पुष्टिरित्यर्थोऽङ्गीक्रियते, प्रत्युतानुमितिरित्येवाऽर्थोऽङ्गीकरणीय इति श्रीशङ्कुकाऽभिप्रायः।

इत्थं च श्रीशङ्कुकमते कार्यकारणसहकारिणो गमकत्वेन प्रसिद्धाः। नाट्ये कृत्रिमत्वेन चमत्कारहेतुत्वादलौकिकव्यपदेशभाजः सूत्रे निर्दिष्टाः। एवम्भूतैर्विभावादिभिर्वस्तुतोऽसम्भविनोऽपि रत्यादिस्थायिनोऽनुमाप्यानुमापकभावलक्षणः सम्बन्धः संयोगः, रसस्य निष्पत्तिः प्रत्येयतयैव स्थितिः। सा चानुकर्तृविषया सामाजिकसम्बन्धिनी च। उभयतो दत्तपादा हि रससंवित्।

किञ्च, स्वीयरसदर्शने श्रीशङ्कुकेन चित्रतुरगादिन्यायस्य सर्वथाऽभिनवा कल्पना विहिता। अथ च रत्यादिस्थायिभावा रामादावनुकार्ये एव सञ्जायन्ते। तांश्च स्वकीयनाट्यकलापाटवेनाऽनुकरोति नटः। वस्तुतस्तत्र नटो न रामः, न वा दुष्यन्तः, किन्तु चित्रे तुरगोऽयमितिवद् रामत्वेन दुष्यन्तत्वेन वा गृह्यते सामाजिकैः। ततः सहृदयाः सामाजिका नटादिना विभावादिप्रकाशनमवलोक्य—रामोऽयं सीताविषयकरतिमान्, सीताविषयककटाक्षादिमत्त्वात्, यन्नैवं तन्नैवं यथाऽहमित्यनुमापयन्ति। उदलेखि च सुविशदतया तत्रभवद्भिर्विविधरससिद्धान्तावलोडनचणैः श्रीवामनझलकीकरैः—"यथा कुज्झटिकाकुलिते देशेऽसतोऽपि धूमस्याभिमानाद् धूमनियतस्य वह्नेरनुमानम्, तथा नटेनैव सुनिपुणं "ममैते विभावादयः" इति प्रकाशितैस्तत्रासद्भिरपि विभावादिभिस्तन्नियता रतिरनुमीयमानापि निजसौन्दर्यबलात् सामाजिकानामास्वाद्यमानतया चमत्कारमादधती रसतामेतीति रतेरनुमितिरेव रसनिष्पत्तिरिति विवरणे स्पष्टम्" (का० प्र०, पृ० ९०, वामनी टीका) इति।

**तत्रायं विशेषः**

भट्टलोल्लटरससूत्रविमर्शकल्पमेवात्रापि श्रीशङ्कुकोपस्थापितरसव्याख्यानोपन्यासेऽपि मम्मटाभिनवगुप्तपादाचार्ययोरीषत्प्रतिपादनवैषम्यमवलोक्यते। तत्र मम्मटाचार्योपस्थापिते श्रीशङ्कुकरससूत्रव्याख्याने 'सामाजिकैरनुमीयमानो रसः' इति सर्वत्रोपलभ्यते। तथाहि—

"चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे—

सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता॥

दैवादहमद्यतया चपलायतनेत्रया वियुक्तश्च।
अविरलविलोलजलदः कालः समुपागतश्चायम्॥

इत्यादिकाव्यानुसंधानबलाच्छिक्षाभ्यासनिर्वर्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथानभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः 'संयोगात्' गम्यगमकभावरूपादनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन भाव्यमानो रत्यादिर्भावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः।" (का० प्र० ४ उल्लास०, पृ० ८९-९०)।

परञ्चाभिनवगुप्तपादाचार्योपस्थापितश्रीशङ्कुकरससूत्रव्याख्याने प्राधान्येन "नटादिनाऽभिनीयमानो रसः" इत्येव प्रतिपादितं समुपलभ्यते। तथाहि—

"हेतुभिर्विभावाख्यैः कार्यैश्चानुभावात्मभिः सहचारिरूपैश्च व्यभिचारिभिः प्रयत्नार्जितया-कृत्रिमैरपि तथानभिमन्यमानैरनुकर्तृस्थितत्वेन लिङ्गबलतः प्रतीयमानस्थायीभावो मुख्यरामादिगतस्थाय्यनुकरणरूपः, अनुकरणरूपत्वादेव न मान्तरेण व्यपदिष्टो रसः।" (अभि० भा०, भा० १, गा० वा० सं०, पृ० २७२) इति।

**श्रीशङ्कुकरससूत्रव्याख्यानस्य मम्मटाऽभिनवगुप्तयोरुपस्थापनभेदबीजम्**

यद्यपि भट्टलोल्लटकृतरससूत्रव्याख्यानस्याधुना स्वातन्त्र्येणोपलम्भाऽभावाद् मम्मटोपस्थापितरससूत्रव्याख्याने सामाजिकविषयकोऽभिनवगुप्तपादाचार्यापेक्षया कथं भेदो जात इति समुचितप्रमाणाभावान्नैश्चित्येन किञ्चिदपि वक्तुं न सुशकम्; तथापि मन्मते तद्भेदकारणमुभयथाऽनुमातुं शक्यते।

१. श्रीशङ्कुककृतरससूत्रव्याख्यानं कदाचिद् मम्मटाचार्यकाले उपलब्धं स्यात्। तदनुगुणमेव मम्मटेन तद्रससूत्रव्याख्यानं यथावदेवोपन्यस्तं स्यादिति प्रथमा सम्भावना।

२. वाग्देवतावतारेण तत्रभवता मम्मटाचार्येणाभिनवगुप्तोपस्थापितश्रीशङ्कुकव्याख्यानमाश्रित्य सामाजिकस्य दृष्टिकोणं पुरतो निधाय स्वेनैतद् व्याख्यानं सुपरिष्कृत्य व्यवस्थापितं स्यादिति द्वितीया सम्भावना। परमार्थस्तु मम्मटाऽभिनवगुप्तपादाचार्ययोर्व्याख्यानसरणिं सम्भूय श्रीशङ्कुकमतेऽनुकार्येऽनुकर्तरि सामाजिके च रसस्थितिः स्वीकरणीया।

इत्थञ्च श्रीशङ्कुकरसदर्शनस्य सर्वथा व्यापकं परिशीलनमस्माभिः कर्तुं शक्यते।

## समीक्षात्मकं विवेचनम्

उपर्युक्तविवेचनेनैतत् सर्वथा साकूतमेव यत्सहृदयहृदयाऽन्तरालेऽधोलिखितरूपेण समुल्लसति श्रीशङ्कुकरससिद्धान्तस्वरूपम्। तथाहि—

काव्यानुसन्धानशिक्षाभ्यासबलात् स्वकार्यनैपुण्यप्रकाशनद्वारा नटेन प्रकाशितैः कार्यकारणसहकारिभिर्वस्तुतोऽसद्भिरपि, परञ्च तथात्वेनाऽगृहीतैर्विभावादिव्यपदेशभाग्भिर्विभावादिसत्त्वे रतेरवश्यंभाव इति व्याप्तिरूपात्—रामोऽयं सीताविषयकरतिमान्, सीताविषयककटाक्षमत्त्वात्। इत्थञ्च सामाजिकैरनुमीयमान आस्वाद्यमानतया लौकिकाऽनुमानविलक्षणो रत्यादिर्भावो नटेऽसन्नपि वासनया चर्व्यमाणो रसपदवीमेतीति रतेरनुमितिरेव रसनिष्पत्तिरिति। इत्येवं रीत्या यद्यपि सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणायाश्चित्रतुरगादिन्यायकल्पनायाः समाश्रयणेन रसपरम्परायामैतिहासिककालक्रमेणैव सर्वथाऽभिनवा दार्शनिकरसचिन्तनचेतना श्रीशङ्कुकादेव संस्कृतसाहित्ये समुन्मिषति। अथ च श्रीशङ्कुकरसदर्शने तर्ककर्कशाश्रयणेनापि रसानुमितेरन्यानुमानवैलक्षण्यप्रतिष्ठापनेन, कल्पनासौन्दर्ययोरप्यनुधावनेन, अभिनवकल्पनाया महत्त्वोपपादनेन च भट्टलोल्लटापेक्षया सामाजिकप्रतीतेर्विशदीकरणद्वारा चास्य रससूत्रविमर्शस्याऽतीव महनीयं महत्त्वमिति न केनाप्यपलापः कर्तुं शक्यते।

तथाऽप्यत्र सन्ति केचनासाधारणा अपरिहार्याश्च दोषाः, येऽस्य रसदर्शनस्याऽपसिद्धान्तत्वमेवोपोद्बलयन्ति। अत एवाऽऽचार्यभट्टतौतेन तु नैकैः प्रबलतमपोषकप्रमाणैः श्रीशङ्कुकरसदर्शनं सर्वात्मनाऽखण्डीति नाविदितमेव विद्वत्तल्लजै रसविमर्शकैः।

आहुश्चात्राऽभिनवगुप्तपादाचार्याः।

"तदिदमप्यन्तस्तत्त्वशून्यं न विमर्दक्षममित्युपाध्यायाः" इति।

(अभि० भा०, भा० १, पृ० २७४, गा० वा० सं०)

तत्रेदमावश्यमाकलनीयम्—अस्मिन् रससूत्रविमर्शे प्रत्यक्षमेव ज्ञानं सचमत्कारकारकम्, नानुमित्यादिरिति महान् लोकप्रसिद्धिविरोधः। अथ च संज्ञातबाधस्य सामाजिकस्य निरुक्तानुमितिविरहेऽप्यास्वादोदयाद्रसं साक्षात्करोमीत्यनुव्यवसायापत्तिश्च सुतरां सञ्जायते। अत एव निखिलं तथ्यातथ्यविवेचनं सम्पाद्य समुपपादि श्रीगोविन्दठक्कुरैः —

"एतदप्यहृदयग्राहि। यतः प्रत्यक्षमेव ज्ञानं सचमत्कारकारकम्, नानुमित्यादिरिति लोकप्रसिद्धिमवधूयाऽन्यथा कल्पने मानाभावः, सूत्रस्याऽन्यथैव योजनाऽसम्भवात्।" ( का० प्र० प्रदीप०, पृ० ६४, आनन्दाश्रम० प्र० )

अत एवाऽनेन रसदर्शनेन न कथमपि रसतत्त्वस्वरूपसाक्षात्कारः सम्भवति। अत एव श्रीशङ्कुकरसदर्शनस्य सर्वथा हेयत्वमेवेत्यवधार्य श्रीभट्टनायकरसदर्शनं प्रवर्तते। किं बहुना, अभिनवगुप्तपादाचार्यैस्तु प्रतिपदं श्रीशङ्कुकरसदर्शनस्यासारत्वमेव सुविशदतया समुद्घोषितम्—

"ननु ( न तु ) यथा शङ्कुकादिभिरभ्यधीयत—स्थाय्येव विभावादिप्रत्याय्यो रस्यमानत्वाद्रस उच्यत इति। एवं हि लौकिकोऽपि किं न रसः, असतोऽपि हि यत्र रसनीयता स्यात्तत्र वस्तुसतः कथं न भविष्यति ? तेन स्थायिप्रतीतिरनुमितिप्राच्या(प्या ) न रसः। अत एव सूत्रे स्थायिग्रहणं न कृतम्। तत्प्रत्युत शल्यभूतं स्यात्। केवलमौचित्यादेवमुच्यते स्थायी रसीभूत इति। औचित्यं तु स्थायिगतत्वेन कारणादितया प्रसिद्धानामधुना चर्वणोपयोगितया विभावादित्वालम्बनात्।" ( अभि० भा०, भा० १, पृ० २८४, गा० वा० सं० )

अत एवाऽलङ्कारशास्त्रीयपरम्परायाः सर्वथा प्रतिकूलरसदर्शनोपन्यासेन नायं पक्षः कथमपि समादरणीयः।

## श्रीशङ्कुकरससिद्धान्ते सत्तात्रयविमर्शः

अभिनयेषु सर्वत्र सत्तात्रयस्योपस्थितिर्नितान्तमपरिहार्या भवति। तत्र केषाञ्चिदैतिहासिकरामसीतादुष्यन्तशकुन्तलाद्यनुकार्याणां क्रियाकलापस्य जीवनव्यवहारस्य च स्वस्वीयाभ्यासनर्तनकौशलेनाऽभिनयं सम्पाद्य सहृदयसामाजिकानामन्तःकरणे कश्चनाऽपूर्वोऽनिर्वचीयो ब्रह्मानन्दकल्प आह्लादो जायते।

अत्र नास्ति केषाञ्चिदपि विदुषां विसंवादाऽवसर इति सर्वथा सुनिर्णीतं तथ्यमिति निखिलं पर्यालोच्याऽधुनाऽस्माभिः श्रीशङ्कुकरसदर्शनेऽधोल्लिखितसत्तात्रयस्य कीदृशी व्यवस्थेति यथाक्रमं पर्यालोच्यते ।

१. मुख्यानुकार्यरामादिसत्ताविमर्शः ।

२. अनुकर्तृनटादिसत्ताविमर्शः ।

३. अनुमातृसहृदयसामाजिकसत्ताविमर्शः ।

## (१) तत्र मुख्यानुकार्यसत्ताविमर्शः

श्रीशङ्कुकरसविवेचनेऽनुकार्यस्य स्थितिः सर्वथा सुस्पष्टा वर्तते । यतोऽहि—

"हेतुभिर्विभावाख्यैः कार्यैश्चानुभावात्मभिः सहचारिरूपैश्च व्यभिचारिभिः प्रयत्नार्जिततया कृत्रिमैरपि तथानभिमन्यमानैरनुकर्तृस्थत्वेन लिङ्गबलतः प्रतीयमानः स्थायीभावो मुख्यरामादिगतस्थाय्यनुकरणरूपः, अनुकरणरूपत्वादेव च नामान्तरेण व्यपदिष्टो रसः" । ( अभि० भा०, भा० १, पृ० २७२ )

इत्यादौ "मुख्यरामादिगतस्थाय्यनुकरणरूपो···रसः" इति कथनेन सुविशदमेवैतद् यच्छ्रीशङ्कुकरसदर्शने स्थायिभावस्य स्थितिरनुकार्येष्वेव सर्वतोभावेनाऽङ्गीकृता वर्तते ।

अपि च—

विरुद्धैरविरुद्धैर्वा　भावैर्विच्छिद्यते　न　यः ।
आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥

( दशरूपकम्, ४।३४ )

इत्येवं लक्षणलक्षितोऽनुकार्यरामादिनिष्ठस्थायिभावो नटादिभिरनुक्रियते । आचार्यभट्टलोल्लटेन स्थायिभावस्य स्थितेर्द्वैविध्यं स्वीकृतम्—

( १ ) स्थायिभावस्य वासनारूपत्वम् ।

( २ ) स्थायिभावस्य विभावादिभिरुद्बुद्धत्वं परिपुष्टत्वञ्च ।

तत्र प्रथमस्य तेनाऽनुपचितत्वाद् भावत्वेन द्वितीयस्य चोपचितत्वाद् रसत्वेन व्यपदेशोऽकारि । इत्थञ्च रसभावयोश्चावस्थितिरनुकार्ये रामादावेवेति भट्टलोल्लटेनोररीकृता, परञ्च श्रीशङ्कुकमते भट्टलोल्लटापेक्षया भूयान् व्यतिरेको दृश्यते । यतो हि श्रीशङ्कुको न दुष्यन्तादावनुकार्ये कथमपि रसस्थितिमङ्गीकरोति । किं बहुना, स्थायिभावस्यापि तदैव दुष्यन्तादावनु-

कार्ये स्थितिमङ्गीकरोति, यदा विभावादयो रत्यादिस्थायिभावानामनुमापकतयाऽवतिष्ठन्ते, नान्यथा। अत एवाह श्रीशङ्कुकः —

"विभावाद्ययोगे स्थायिनो लिङ्गाभावेनावगत्यनुपपत्तेः" इति।

( अभि० भा०, भा० १, पृ० २७२ )

एवं चानेन रससूत्रव्याख्याकारेणाऽनुकार्ये विभावाद्यसम्बद्धस्थायिभावो वासनारूपेणापि नाऽङ्गीकृतः, अपि तु विभावादिसम्बद्धः, समुद्बुद्धश्च स्थायिभावो भवतीति सुविशदतया परिलक्ष्यतेऽस्माभिः। अथ च मूलपात्रस्य भावस्थितिर्लौकिकधरातलेन सुसम्बद्धो भवति। नायकनायिकादयस्तस्य कारणस्थानीयाः, चेष्टादयः कार्यस्थानीयाः, चिन्तादयश्च सहकारिस्थानीयाः सञ्जायन्ते। एभिरेव सहृदयसामाजिकचेतसि रामसीतादुष्यन्तशकुन्तलाद्यैतिहासिकाऽनुकार्याणां भावदशायाः परिज्ञानं जायते। अस्मिन् लौकिकभावज्ञाने कश्चन सर्वतोभावेन सुनिपुणः प्रतिभासम्पन्नश्चैव सहृदयो रसस्यानुमानं कर्तुं प्रभवति। इत्थञ्च लौकिकसामग्री यदाऽभिनये नटादिभिरुपस्थाप्यते, तदा सामाजिकेभ्योऽनुमापककार्यं सम्पादयति। ततश्च लौकिककारणादयो विभावानुभावव्यभिचारिण इत्यलौकिकसंज्ञां लभन्ते। अत एवोक्तं श्रीमम्मटाचार्येण "···नटेनैव प्रकाशितैः कारणकार्यसहकारिभिर्विभावादिशब्दव्यपदेश्यैः······।" ( का० प्रा० पृ० ८९ ) इति।

## (२) अनुकर्तृनटादिसत्ताविमर्शः

श्रीशङ्कुकरसदर्शने नटस्यातीव महनीयं महत्त्वपूर्णञ्च स्थानं विलसति। वस्तुतो नाट्यशास्त्रव्याख्यातृपरम्पराऽनुगुणमेव श्रीशङ्कुकोऽपि नाट्यरसविमर्शकः, न च काव्यरसविवेचकः। अत एव काव्यविच्छित्तिमहिम्नाऽऽवरणभङ्गद्वारा सहृदयहृदये या हि काप्यनिर्वचनीया ब्रह्मानन्दकल्पाऽपूर्वरसाऽनुभूतिर्जायते, तया सह श्रीशङ्कुकः सर्वथाऽपरिचित एवेति प्रतीयते। वस्तुतस्त्वत्र मतेऽभिनय एव रसोद्भवभूरिति। यतो ह्यनभिनीतस्य रसस्य रसत्वमेव न कथमपि सम्भवतीति श्रीशङ्कुकादिभिः कण्ठरवेण प्रत्यपादि। अत एवोक्तम्—

"अनुकरणरूपत्वादेव च नामान्तरेण व्यपदिष्टो रसः। तेन रतिरनुक्रियमाणा शृङ्गार इति तदात्मकत्वं तत्प्रभवत्वञ्च युक्तम्।" ( अभि० भा०, भा० १, पृ० २७२, गा० बा० सं० ) इति।

इत्येवंरीत्या काव्यरसस्य न कापि चर्चाऽस्मिन् रससिद्धान्ते वर्तते। एतत्तु सर्वथाऽवधेयमेव यदाचार्याऽऽनन्दवर्धनाचार्येभ्यः पुरातनेष्वालङ्कारिकेषु, विशेषतो नाट्यशास्त्रव्याख्यातृषु, काव्यरसं

प्रत्यौदासीन्यमेवाऽवलोक्यते। अत एवात्र रसस्यानुक्रियमाणपक्षस्यैव प्रधानत्वाद् नट एवाऽस्य सिद्धान्तस्य प्राणप्रदः केन्द्रबिन्दुश्च वर्तते। किन्तु श्रीशङ्कुको भट्टलोल्लटादीनामिव मुख्याऽनुकार्यवदेव नटेऽपि रसभावयोः स्थितिर्भवतीति कथमप्यङ्गीकरोति। नटे तु रसस्थायिभावयोश्चानेन सर्वात्मना निषेधो व्यधायि। अत एवाह—

"तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रसः"।

( मम्मटः–का० प्र०–प्रदीपोद्योते, पृ० ६६, )

तदेव च सुविशदतयोपन्यस्तं तत्रभवद्भिः श्री पी० वी० काणेमहाशयैः —

It would be noticed that Sankuka speaks of Rasa from the standpoint of the spectator. It is his view that Rasa is inferred by the spectator. The स्थायिभाव in the Original hero is infrerred to exist in the actor ( though not actually existing in him. ( P. V. Kane—History of Sanskrit Poetics, Page 371 )

अत एव रसस्यानुक्रियमाणपक्षस्य परमोपयोगिताऽङ्गीकाराच्छ्रीशङ्कुकरससमीक्षायां नट एवाऽऽधारस्तम्भतया राराजते। वस्तुतोऽत्र मते रामाद्यनुकार्यनिष्ठाया रतेरनुकरणं सम्पद्यते। तत्राऽनुकरणप्रक्रियायां रत्यादिस्थायिभावानां परमाह्लादजनकतया शृङ्गारादिरूपेण नामान्तरव्यपदेशो नितान्तं नैसर्गिकः। अतोऽस्मिन् रसदर्शने परम्परयाऽनुकर्तृनिष्ठो रस इत्यपि यथाकञ्चिद् वक्तुं शक्यते, किन्त्वनुकरणात्मकत्वादेव। अत एवोक्तम् —

"अनुकरणत्वादेव नामान्तरेण व्यपदिष्टो रसः" इति।

( अभि० भा०, भा० १, पृ० २७२, गा० वा० सं० )

तत्रायमभिप्रायः—सकलाऽभिनयकलाचतुरो नटः स्वकीयाऽनुभवशिक्षाभ्यासमहिम्नैव दुष्यन्ताद्यनुकार्यनिष्ठरत्यादिस्थायिभावानां कटाक्षभुजोत्क्षेपप्रभृत्यनुभावानाञ्च याथातथ्येनोपस्थापने महत्साफल्यं लभते। तत्र स्वकीयाऽनुभवाऽपेक्षयाऽनुभावप्रदर्शने शिक्षायाः, व्यभिचारिभावानामभिनयने, शिक्षापेक्षया स्वानुभवस्य च महान् प्रभावः समापतति। आहुश्चात्र— "अनुभावाः शिक्षातः। व्यभिचारिणः कृत्रिमनिजानुभावार्जनबलात्।" ( अभि० भा०, भा० १, पृ० २७२—२७३ )

एवञ्च श्रीशङ्कुकरसदर्शने विभावाः काव्यशब्दैः, अनुभावाः शिक्षाभ्यासाभ्याम्, व्यभिचारिणः स्वानुभवैः संगृह्य एवमुपस्थाप्यन्ते, येन रसनिमग्नतया सामाजिकास्तेषां कृत्रिमत्वं सर्वात्मना विस्मृत्य तैरेव वास्तविकरूपेणाऽऽनन्दाऽनुभूतिं सम्प्राप्नुवन्तीति। अपि च विभावानुभावव्यभिचारिभावानां सामाजिकप्रतीत्यनुगुणसम्पादनमेवात्राऽनुकर्तुर्नाट्यनैपुण्यस्य लोकोत्तरं साफल्यं नितान्तमपेक्षितं भवति। अनेन प्रकारेण नट एवास्य रसानुमितिवाददर्शनस्य जीवनाधायकमपरिहार्यञ्चाङ्गम्, अथ च प्राणप्रदकल्पं तत्त्वमिति सुतरां सिद्धयति। अत एव सर्वं पर्यालोच्य श्रीकाणेमहाशयैरभ्यधायि—"शङ्कुक thinks that Rasa is a matter of inference. The actor who has been well trained in the art of gesticulation cleverly simulates the actions of real heroes and the spectator aphchends for the moment of actor as non-different from the real hero and infers love (of Rāma etc.) from the अनुभावs and व्यभिचारिभावs presented by the actor and mentally contemplates such love and relishes it" (P. V. Kane, History of Sanskrit Poetics, pp. 370—371)

इत्थञ्च मया श्रीशङ्कुकदर्शनेऽनुकर्तृनटादिस्थितिविश्लेषणाय यत्नो विहितः। तेनैतज्ज्ञातं यद् नटस्थितेरवगमनमन्तराऽस्य रसानुमितिवाददर्शनस्य सुनिपुणेन केनचित् प्रतिभासम्पन्नेन विदुषापि रहस्यस्फोरणं कर्तुं न शक्यते।

### (३) अनुमातृसहृदयसामाजिकसत्ताविमर्शः—

श्रीशङ्कुकरसदर्शने भट्टलोल्लटरसविमर्शापेक्षया सामाजिकस्य स्थितिः सुतरां वैशद्यमावहति। एतदप्यत्राऽवधेयं वरीवर्ति यद् यद्यपि श्रीशङ्कुकस्य सामाजिको नाभिनवगुप्तपादाचार्याऽभिमतसामाजिकवद् विमलप्रतिभानहृदयो न वा संविद्विश्रान्तिसम्पन्नश्च वर्तते, तथापि लौकिकभावभूमेः सामीचोन्येन सुपरिचित एव वर्तते। यतो हि स्वकीयपरकीयहर्षशोकादीनां मुहुर्मुहुरनुभावानुसन्धानाभ्यां सामाजिक एवंविधनैपुण्यमधिगच्छति। येन स कस्यापि नायकनायिकादेर्भङ्गभ्रूकुटिना तस्याऽन्तःकरणनिष्ठक्रोधस्य, मन्दस्मितेन स्नेहस्य, अश्रुधाराभिः शोकस्य च धूमदर्शनेनाऽग्नेरिवानुमानं सम्यक् सम्पादयति। यद्यप्यस्मिन् मते नायं रामः, न चेयं सीता; अपि तु नटो नटी वेति वस्तुतत्त्वं जानन्नपि सामाजिकः सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रे तुरगोऽयमितिवद् नटेऽपि रामोऽयमिति प्रतिपत्त्या नटेनैव प्रकाशितैः कारण-

कार्यसहकारिभिः सीताऽनुरागरञ्जित आनन्दमग्नोऽयं राम इति, उत जनकनिधनशोकविह्वलोऽयं राम इत्यवधार्य हर्षशोकादीनामास्वादनं विदधाति ।

वस्तुतश्चित्रतुरगादिन्यायसमवलम्बनेन लौकिकानुमानविलक्षणयाऽनुमितिकल्पनया च श्रीशङ्कुकेन सत्यस्योपरि कलाक्षेत्रीयसाम्राज्यस्थापनाय यत्नो विहित इति प्रत्यक्षमेव लोचनगोचरीभवति । एवञ्च सामाजिकस्थितिमभिलक्ष्यैव श्रीशङ्कुकरसदर्शनं प्रवर्तते । श्रीशङ्कुकरससिद्धान्ते सामाजिकः खलु नटादिना रामाद्यनुकार्याणामनुभावस्य विलक्षणानुमानद्वारा लोकोत्तराह्लादमनुभवति । श्रीशङ्कुकरसदर्शनस्याऽभिनवगुप्तपादाचार्योपस्थापनापेक्षया मम्मटोपस्थाने सामाजिकविचारः सर्वथा सुस्पष्टो वर्तते । यतो हि मम्मटोपस्थापिते श्रीशङ्कुकव्याख्याने सामाजिकस्य रसचर्वणाया महान् अवकाशो विद्यते । अत एव वासनया सामाजिके रसचर्वणा सम्पद्यत इत्यपि सर्वथा नैसर्गिकमेव ।

अस्याः सामाजिकस्थायिभावचर्वणायाः श्रीहेमचन्द्रेणाऽतीव रमणीयेन चोदाहरणेन परिपुष्टिः कृता वर्तते—"...... वस्तुसौन्दर्यबलात् कषायफलचर्वणपरपुरुषदर्शनप्रभवसुखसेककलनाकल्पनया रसनीयरूपया अन्यानुमीयानविलक्षणः स्थायित्वेन सम्भाव्यमानः · इति ।"

(अल० चू०, पृ० ६०-६१)

अत्र मम्मटोपस्थापनकल्पमेव श्रीशङ्कुकसामाजिकस्य वैशद्यनोपन्यासः कृतः, परञ्चैतन्नूनमेव निभालनीयं यत् सामाजिकरत्यादिचर्वणासम्बन्धश्रीशङ्कुकसम्मतरससूत्रविमर्शोपस्थापनाऽवसरेऽभिनवगुप्तपादाचार्याः सर्वथा तूष्णीमेवाऽवलम्बमाना दृष्टिपथमवतरन्ति । किं बहुना, ते तु—

"विभावाद्ययोगे स्थायिनो लिङ्गाभावेनावगत्यनुपपत्तेः ।"

(अभि० भा०, भा० १ पृ० २७२)

इत्युक्तदिशा श्रीशङ्कुकमते स्थायिभावस्य वासनारूपत्वमपि न परिपोषयन्ति; अपि चोक्तरीत्याऽस्मिन् रससूत्रविवेचने विभावाद्यनुमापकलिङ्गशून्यस्थायिनः सत्ताऽपि मुख्येऽनुकार्ये नास्तीति सुतरां सिद्ध्यति । अतः "सामाजिकानां वासनया चर्व्यमाणो रसः" (का० प्र० ४ उ०) इति मम्मटाचार्यकथनमाऽभिनवगुप्तपादाचार्यव्याख्यानाऽनुगुणम् । वस्तुतो मम्मटाचार्यकाले रसस्यावस्थितेरधिष्ठानं सामाजिक एवेति विषयस्य रससमीक्षाक्षेत्रे सर्वात्मना निश्चय आसीत् । अत एव तदानीं तत्कालीनविचारपरम्पराप्रभावेण पूर्वाचार्याणामनभिमतत्वेऽपि तेषां रससिद्धान्तोपस्थापनाऽवसरे सामाजिकरसचर्वणायास्तत्रभवता मम्मटाचार्येण सन्निवेशोऽकारि ।

## श्रीशङ्करसदर्शने बौद्धन्यायाऽनुलम्बनम्

नानाविधसमुपलब्धप्रमाणोपन्यासपुरस्सरं सविस्तरं पूर्वोक्तरीत्या यथाशक्ति यथापेक्षितं श्रीशङ्करसदर्शनस्य रहस्यस्फोरणाय, तथ्यातथ्ययुक्तायुक्तत्वविमर्शस्य च मया सम्पादनाय प्रयासो विहितः। अत एवास्य रससिद्धान्तस्य सूक्ष्मेक्षिकया पर्यालोचनेनैतल्लोचनगोचरीभवति यदस्य रसदर्शनस्यानुमानमेव जीवनाधायकं तत्त्वम्। अनुमानं खलु न्यायदर्शनस्याकाट्यं प्रबलतमं प्रमाणमिति सर्वथा सुप्रथितमेव। अनेनास्मिन् रसदर्शने लोकोत्तराऽनुमानाश्रयणादस्याधारो न्यायदर्शनमेवेत्यपि निर्विवादम्। परञ्च न्यायदर्शनं हि—

(१) प्राच्यन्यायदर्शनम्।

(२) नव्यन्यायदर्शनम्।

(३) बौद्धन्यायदर्शनम्।

(४) जैनन्यायदर्शनम्।

इति चतुर्षु भागेषु सुविभक्तमस्ति। तत्र च प्रथमौ द्वौ न्यायौ वैदिकौ, अन्तिमौ च द्वाववैदिकौ वर्तेते इति विदितमेव दर्शनतत्त्वावगाहनपराणां विदुषाम्। अत्र चाऽयमनुयोगः समुल्लसति—पूर्वोक्तेषु चतुर्विधेषु न्यायेषु कतमन्न्यायदर्शनं स्वकीयरसदर्शनोपस्थापने श्रीशङ्कोऽनुसरतीति ? तत्रोच्यते—खिस्ताब्दोत्तरद्वादशशताब्द्यां श्रीगङ्गेशोपाध्यायत एव नव्यन्यायसमुद्भवस्य सर्वसम्मतत्वेन, तस्माद् बहोः कालात् प्राक् प्रादुर्भूतेन श्रीशङ्केन तन्न्यायानुसरणं न कथमप्यौचित्यमञ्चति। प्रायेण सामान्यतयाऽद्यावधि विपश्चिदपश्चिमाः शेमुषीसम्पन्ना विमर्शकाः श्रीशङ्कुः खलु प्राच्यन्यायाऽनुगामीति समाम्नासिषुः। अत एव तेषामनुरोधेनापाततः श्रीशङ्कुको वैदिकन्यायाऽवलम्बीति सुतरां सिद्ध्यति। तत्रेदमवश्यमाकलनीयम्—अभिनवभारत्यां समुपबृंहिते श्रीशङ्करससिद्धान्तेऽस्माभिरवलोक्यन्ते कानिचिदवैदिकन्यायपरिपोषकाणि प्रमाणानि, कानिचिच्च धर्मकीर्तिदर्शनस्य सिद्धान्तभूतानि तत्त्वानि; यैः श्रीशङ्कुकस्य बौद्धनैयायिकत्वम्, तदीयरसदर्शनस्य बौद्धन्यायानुप्राणितत्वञ्च सर्वतोभावेन सुतरां सिद्ध्यति। अत एवाधुनाधोलिखितैर्नैकैः प्रबलतमपोषकप्रमाणैरवश्यमस्माभिरवलोक्यते यदस्य रससिद्धान्तस्योद्गमस्थलं बौद्धन्यायदर्शनमेवेति। अथ च श्रीशङ्करसदर्शनं सर्वात्मना बौद्धन्यायदर्शनाऽनुप्राणितमिति रहस्यभूतं तत्त्वं नितान्तं निर्दुष्टं साकूतञ्चाऽस्तीति विदुषां पुरःसरमुल्लसति।

# बौद्धन्यायपरिपोषकप्रमाणानि

## (१) चित्रतुरगादिन्यायकल्पना

श्रीशङ्कुकाचार्येण सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणायाश्चित्रतुरगादिन्यायकल्पनायाः समवलम्बनेन स्वकीयाऽनुमितिवादरसदर्शनोपस्थापनद्वारा किमप्यपूर्वमेव क्रान्तिकारकं दर्शनं सम्पादितम्। ततश्च दार्शनिकदृष्ट्या रसचिन्तनप्रकारस्याऽवतारो भारतीयाऽलङ्कारशास्त्रे समजनि। रज्जुसर्पन्यायस्य यथा वेदान्तदर्शने किमप्यसाधारणं वैशिष्ट्यं बाहुल्यञ्च दरीदृश्यते, तथैव चित्रन्यायस्य बौद्धदर्शने महनीयं महत्त्वमिति न केनाप्यपलापः कर्तुं शक्यते। तत्रेदमवधेयम्—वैदिकन्यायदर्शनेऽनेकघटद्रव्येषु "अयं घटः, अयं पटः" इत्यभेदाकाररूपाऽनुगतप्रतीतिर्जात्या एव सम्भवति। तस्याश्च जातेर्नित्यत्वे सत्यनेकसमवेतत्वमिति लक्षणाङ्गीकारात्तैः पृथक् पदार्थत्वं नित्यत्वञ्च सर्वतोभावेन सुप्रतिष्ठापितम्, परन्तु तस्याश्चानुगताकाराया जातेर्बौद्धनैयायिकाः सत्तामपि नाङ्गीकुर्वन्ति, अपि तु जगति यत्किमपि सत्तन्निखिलं क्षणिकमिति क्षणिकवाददर्शनानुसारं तद्भिन्नभिन्नत्वरूपात्मकाऽपोहसिद्धान्तद्वाराऽनुगताकारप्रतीतिकार्यं संसाधयन्ति बौद्धनैयायिकाः। अस्मिन् सन्दर्भे जातेर्निराकरणमपोहस्य च प्रतिष्ठापनं चित्रन्यायेनैव बौद्धा व्यवस्थापयन्ति। प्रतिपादितञ्च धर्मकीर्तिना चित्रन्यायस्वरूपम् —

नीलादिश्चित्रविज्ञाने ज्ञानोपाधिरनन्यभाक्।
अशक्यदर्शनस्तं हि पतत्यर्थे विवेचयन्॥

( प्र० वा०, परमार्थसारः, पृ० १९ )

इयमेव चित्रन्यायमवलम्ब्यास्मिन् रसदर्शने सामाजिकोऽभिनये, 'नायं रामः, न वा सीता' अपि तु नटी नटो वेति जानन्नपि चित्रे तुरगोऽयमितिवद् नटे रामोऽयमिति प्रतिपत्त्या नटेनैव प्रकाशितैः कृत्रिमैरपि विभावानुभावव्यभिचारिभिरलौकिकाह्लादमयं सञ्जायते सहृदयहृदयाऽन्तरालम्। इत्थञ्च चित्रतुरगादिन्यायाश्रयणाभावे शशशृङ्गायमाणत्वमन्तरा नान्या काचिद् गतिरस्य रससिद्धान्तस्य भवितुमर्हतीति। अत एव नैश्चित्येनैतद् वक्तुं सुशकं यत् चित्रतुरगादिन्यायसन्निविष्टमिदं श्रीशङ्कुकरसदर्शनं धर्मकीर्तिदर्शनेन नितान्तमनुप्राणितमिति नास्त्यत्र सन्देहकणिकाऽवकाशलेशोऽपि।

## (२) बौद्धदर्शनाऽनुमता पदरचना

श्रीशङ्कुकरससिद्धान्ते प्रयुक्ता पदरचनाऽस्य बौद्धन्यायाऽनुप्राणितत्वमेव द्योतयति, यतो हि हेतुलिङ्गकार्यसहचारिशब्दानां निरवच्छिन्नरूपेण प्रयोगो वैदिकन्यायदर्शने बौद्धन्यायदर्शने

चोभयत्रापि निर्विशेषः, तथापि "सम्यग् ज्ञानमिति पदं तत्त्वज्ञानाय, यथार्थज्ञानाय वा प्राधान्येन बौद्धन्यायदर्शन एव प्रयुज्यते।" सम्यग् ज्ञानमिति बौद्धन्यायदर्शनस्य पारिभाषिकी पदरचना। अस्याश्च पदरचनाया अस्मिन् रसदर्शने भूयान् प्रयोगः, अपरिहार्यञ्च महत्त्वं स्वीकृतमस्तीति निर्विवादम्। अतोऽत्र 'सम्यग्'शब्दो बौद्धन्यायादेव समागत इति सर्वथा स्वीकरणीयम्।

## (३) मिथ्याज्ञानेनाऽप्यर्थक्रियाकारिता

श्रीशङ्कुकरससिद्धान्ते नटादिना दुष्यन्ताद्यनुकार्यनिष्ठरत्यादयो भावा अनुक्रियन्ते। यद्यपि नटे न रत्यादयो भावा नैसर्गिकाः। अथ च नाऽयं रामः, अपि तु नट इति जानन्तोऽपि सामाजिकाः, सम्यङ्मिथ्यासादृश्यप्रतीतिभ्यो विलक्षणेन चित्रतुरगादिन्यायेनाऽभिनये रामवेषभूषाऽलङ्कृतं सीताऽनुरागजन्यानुभावप्रदर्शकं नटमवलोक्य "रामोऽयं सीताविषयकरतिमान्, सीताविषयककटाक्षादिमत्त्वात्, यन्नैवं तन्नैवम्; यथाऽहमित्यनुमानेन रसानास्वादयन्ति। तत्र चैषा सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणा या श्रीशङ्कुकस्य चित्रतुरगादिन्यायेन रसाऽनुमितिकल्पना, साऽपि परमार्थतो मिथ्यैवेति स्वयमेवाङ्गीकृतं श्रीशङ्कुकेन, किन्तु नव्यन्याये प्राच्यन्याये च मिथ्याज्ञानेनाऽर्थक्रियाकारित्वं गगनकुसुमायमानमेवेति। अत एवाऽत्र रसदर्शनेऽनया मिथ्याप्रतीत्या कथं रसाऽनुभूतिरूपार्थक्रियाकारित्वं सम्भवतीत्यनुयोगस्य समाधानं बौद्धनैयायिकधर्मकीर्तेः प्रमाणवार्त्तिकप्रमाणेन श्रीशङ्कुको विदधाति। तत्र मिथ्याज्ञानेनाऽप्यर्थक्रियाकारित्वं लोकेऽप्यनुदिनमनुभवपथमागच्छतीति धर्मकीर्तेः समुद्घोषणम्। तथाह्यर्थाक्रियाऽपि मिथ्याज्ञानाद् दृष्टा—

मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति॥
(प्र० वा० २।५।५७)

इति धर्मकीर्तिदर्शनं पुरतो निधाय चित्रतुरगादिन्यायेन रसाऽनुभूतिरूपार्थक्रियाकारित्वं सर्वथा निर्बाधमिति रसाऽनुमितिवादरसदर्शनं नितान्तं निर्दुष्टमिति श्रीशङ्कुकः समुद्घोषयति। वस्तुतोऽत्र रसदर्शने न वर्तक एव सुखीति प्रतिपत्तिः। नाऽप्ययमेव राम इति। न चाऽप्ययं न सुखीति। नापि रामः स्याद्वा न वाऽयमिति। न चापि तत्सदृश इति। किन्तु सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणा चित्रतुरगादिन्यायेन यः सुखी रामः, असावयमिति प्रतीतिरस्तीति। तदाह—

प्रतिभाति न सन्देहो न तत्त्वं न विपर्ययः ।
धीरसावयमित्यस्ति नासावेवायमित्यपि ॥
विरुद्धबुद्धिसम्भेदादविवेचितसम्प्लवः ।
युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कया ॥

( हि० अभि०, भा० १, पृ० ४२० )

इत्युक्तनयेन बौद्धन्यायदर्शने मिथ्याज्ञानादप्यर्थक्रियाकारित्वं सम्भवति । तदीयदर्शनाऽनुगुणमेव चित्रतुरगादिन्यायेन रसाऽनुभूतिरूपार्थक्रियाकारित्वसम्पादनम्, न विरुद्धबुद्धिजनकमिति श्रीशङ्कुकाभिप्रायः । अत एवाऽस्मिन् रसदर्शने बौद्धदर्शनाऽनुप्राणितत्वं निर्बाधमेव ।

## (४) आचार्यभट्टतोतकृतश्रीशङ्कुकरससिद्धान्तनिरासप्रकारः

अभिनवभारत्यां श्रीमताऽभिनवगुप्तपादाचार्येण यदाचार्यभट्टतोतकृतश्रीशङ्कुकरससिद्धान्तखण्डनप्रकारः प्रादर्शि तेनाऽप्यस्य रसदर्शनस्य बौद्धन्यायाऽनुप्राणितत्वमेव सुतरामायाति । यतो हि श्रीशङ्कु रसदर्शनस्याऽनुकरणात्मकत्वं खण्डयता भट्टतोतेन सुव्यक्तमेव संसूचितं यन्न केनापि प्रकारेण भावानामनुकरणं सुशकम् । अत एव श्रीशङ्कुकस्य भावानामनुकरणात्मकत्वप्रतिष्ठापनं न विचारपेशलमिति भट्टतोतखण्डनस्य तत्त्वम् । अत एवाहाचार्यभट्टतोतः—

"अनुकरणरूपो रस इति यदुच्यते तत्किं सामाजिकप्रतीत्यभिप्रायेण, उत नटाभिप्रायेण, किं वा वस्तुवृत्तविवेचकव्याख्यातृबुद्धिसमवलम्बनेन; यथाहुः —व्याख्यातारः खल्वेवं विवेचयन्ति, अथ भरतमुनिवचनानुसारेणाद्यपक्षोऽसङ्गत...... ।" ( अभि० भा०, भा० १, पृ० २७४, गा० वा० सं० ) ।

इत्युक्तदिशा पक्षचतुष्टयखण्डनोपस्थापनप्रसङ्गे "व्याख्यातारः खल्वेवं विवेचयन्ति" इति कथनेनाऽस्य सिद्धान्तस्य बौद्धदर्शनमूलकत्वमवधार्यैव श्रीभट्टतोतेन "व्याख्यातारः खल्वेवं विवेचयन्ति ।" ( प्र० वा०, स्वार्थानुमानपरिच्छेदः, पृ० १७०, राहुलसं० ) इति धर्मकीर्तेः प्रमाणवार्त्तिककथनस्याऽप्युपरि महानाक्षेपः कृतः । यतो हि श्रीशङ्कुकरसदर्शनस्यानुकरणरूपात्मकत्वखण्डनाऽवसरे श्रीधर्मकीर्तेः कथनोपस्थापनेनैतदेव संसूचयति भट्टतोतो

यद्रसाऽनुकरणवादस्य स्थापना तव गुरुणा श्रीधर्मकीर्तिनाऽपि दुरुपपादैवेति। अत एवाऽस्य रसदर्शनस्य धर्मकीर्तेर्बौद्धदर्शनमेव मूलमित्यनुमातुं शक्यते। श्रीशङ्कुकेन यस्माद् धर्मकीर्तिदर्शनाद् दार्शनिकी चेतना समधिगता, तत्तु प्रमाणवार्त्तिकेऽनेन प्रकारेणोपन्यस्तमवलोक्यते—"ननु बाह्या विवेकिनः, न च तेषु विकल्पप्रवृत्तिः, कथं तेषु भवतीति? व्याख्यातारः खल्वेवं विवेचयन्ति, न तु व्यवहर्तारः। ते तु स्वावलम्बनमेवार्थक्रियायोग्यं मन्यमाना विकल्प्यार्थावेकीकृत्य प्रवर्तन्ते। तदभिप्रायवशादेवमुच्यते। तथा तत्कारितयाऽतत्कारिभ्यो भिन्नान् शब्देन प्रतिपादयन्तीत्युच्यते। तत्त्वचिन्तकास्तु प्रतिभासाभेदादिभ्यो नाभेदमनुसंदधते।" ( प्रमाणवार्तिकवृत्तिः, पृ० १७०–१७१, स्वार्थानुमानपरिच्छेदः )।

## (५) भट्टतोतस्याप्रासङ्गिकी सामान्यचिन्ता

अनुमितिवादरसदर्शनखण्डनाऽवसरे—"नर्तकान्तरेऽपि च रामोऽयमिति प्रतिपत्तिरस्ति, ततश्च रामत्वं सामान्यमित्यायातम्" इति भट्टतोतकथनमप्यतीव महनीयं महत्त्वमावहति। यद्यपि भट्टतोतस्याऽनुमितिवादरसदर्शननिरासावसरे सामान्यस्याऽस्तित्वविमर्शः, तस्य च बहुभिः प्रमाणैः प्रतिष्ठापनं नितान्तमप्रासङ्गिकं प्रतिभाति, तथाप्यस्य रससिद्धान्तस्य यन्मूलं धर्मकीर्तेस्तद्भिन्नभिन्नत्वरूपात्मकमपोहदर्शनं तदीयदर्शनस्य मूलभूतसिद्धान्तनिराकरणेनैवाऽनायासेनास्यापि निराकरणं सुतरां नैसर्गिकम्। अतः श्रीशङ्कुकरसदर्शनं बौद्धन्यायानुप्राणितमिति सुप्रमाणितं न्यायसंगतञ्च प्रतिभाति। अन्यथाऽभिनवभारत्यां श्रीशङ्कुकरससिद्धान्तविवेचनप्रसङ्गे समुपलभ्यमानसामान्यसंज्ञाप्रतिष्ठापनमनपेक्षितमसमञ्जसं च स्यात्।

## (६) विकल्पिकया धियाऽभेदव्यवस्था

श्रीशङ्कुकरससिद्धान्तविश्लेषणं सामाजिकाऽनुभवविवेचनाय—

पररूपं स्वरूपेण यया संव्रियते धिया।
एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः॥
तया संवृतनानार्थाः संवृत्या भेदिनः स्वयम्।
अभेदिन इवाभान्ति भावा रूपेण केनचित्॥
तस्या अभिप्रायवसात् सामान्यं सत् प्रकीर्तितम्।
तदसत् परमार्थेन यथा संकल्पितं तथा॥

( प्र० वा०, सामान्यचिन्ता ७०, ७१, ७२ )

इति धर्मकीर्तेरतद्व्यावृत्तिरूपापोहसिद्धान्तविवेचनमेवाश्रयते। अन्यथा नटरामयोर्भेदज्ञानस्य सर्वथा जागरूकत्वेऽत्र रसदर्शने रसचर्वणाया अवकाश एव न सम्भवति। अत एव

पूर्वोक्ते धर्मकीर्तेरपोहदर्शने "अयं घटः, अयं घटः" इति नैकघटव्यक्तिष्वाकारादिभेदसत्त्वेऽपि विकल्पिकया धिया व्यवहारिपुरुषस्याऽभेदप्रतीतिर्जायते। तत्र च वस्तुतो विकल्पिकाया बुद्धेरेष स्वभावो यत्तया भेदेष्वावरणं प्रसार्य एकार्थप्रतिभासरूपात्मकं कार्यं सम्पाद्यते। अत एवोक्तम्—"बुद्धिर्विकल्पिका तदन्यव्यतिरेकिणो भावानाश्रित्य उत्पन्ना स्वस्ववासनास्वभावमनुविदधती एषां भावानामभेदमध्यस्य स्वयमेवाभिन्नाकारं तान् सृजन्ती मिश्रयन्ती दर्शयति" इति।

( प्र० वा०, वृत्तिः, पृ० १६७–१६८ )

अतोऽनया विकल्पिकया धियाऽन्योन्यभिन्ना अपि पदार्थाः सर्वथाऽभिन्नत्वरूपेणैव व्यवहारिपुरुषैः सम्प्रतीयन्ते। इत्थमेव च श्रीशङ्कुकरसदर्शने सामाजिकोऽप्येकः खलु व्यवहारिपुरुषः। तस्यापि च विकल्पिकधियैव नटरामयोरभेदप्रतिभासः सम्पद्यते। धर्मकीर्तेर्दृश्यविकल्प्यार्थवदेव श्रीशङ्कुकरसदर्शने सामाजिकस्याऽभेदप्रतिभासः सम्भवति। अपि च तत्र यथा वस्तुवृत्तेन सर्वथा सुपरिचितस्तत्त्वचिन्तको व्याख्याता समालोचकः परस्परं भिन्नयोः पदार्थयोर्वैशिष्ट्यमवगच्छति, तथैव यदा श्रीशङ्कुकस्य सामाजिकस्तत्त्वचिन्तकस्तदा सोऽपि चित्रतुरङ्गयोर्नटरामयोश्च परस्परं भेदमवगच्छत्येव। तदानीं तु परमार्थतो न स सामाजिकः, अपि तु तत्त्वचिन्तकरूपेणाऽवतिष्ठते। एतच्च श्रीशङ्कुकस्य सामाजिकप्रतीतिविश्लेषणमस्य बौद्धन्यायाऽनुप्राणितत्वमेव द्योतयति।

## (७) स्थायिभावस्योपचितत्वाऽनुपचितत्वनिरासः—

श्रीशङ्कुकेन यद्भट्टलोल्लटस्य "अनुपचितः स्थायी, उपचितो रसः" इति स्थायिभावस्य स्थितिद्वयमङ्गीकरणं "विभावाद्ययोगे लिङ्गाभावेनाऽवगत्यनुपपत्तेः" इति कथनद्वारा न विचारपेशलमिति समुद्घोषयताऽखण्डि, तदपि बौद्धदर्शनाऽनुगुणमेव। तत्रेदं रहस्यम्—बौद्धाः खलु प्रत्यक्षाऽनुमानव्यतिरिक्तं न प्रमाणान्तरमामनन्तीति सिद्धान्तं मनसि निधायैव श्रीशङ्कुकस्य पूर्वोक्तखण्डनप्रकारः सम्भवति। या रत्यादिस्थायिभावानामनुपचिता दशा स्थायिभावत्वेनोरीकृता भट्टलोल्लटेन तस्याश्च दशाया भावात्मकत्वं न प्रत्यक्षम्। तदानीञ्च विभावादिलिङ्गाभावाद् नानुमानम्। अत एव प्रमाणान्तराऽनुपलम्भात् स्थायिभावस्योपचितत्वाऽनुपचितत्वं न कथमपि सम्भवतीति बौद्धन्यायाऽनुरोधेनैव पूर्वोक्तं श्रीशङ्कुकेन भट्टलोल्लटरसदर्शनस्य खण्डनं विहितम्। इत्थञ्च प्रतिपदं श्रीशङ्कुकरसदर्शनं बौद्धदर्शनस्य नाऽल्पमाधमर्ण्यमावहतीति सहृदयसमीक्षकैरवश्यं निभालनीयम्।

---

# माधवीयधातुवृत्तेः स्थलविशेषे पाठविचारः

श्रीशिवनारायणशास्त्री, संस्कृतविभागाध्यक्षः, किरोड़ीमलकालेज, दिल्ली-७।

क्षीरतरङ्गिण्यां नामधातुवृत्तौ श्रीक्षीरस्वामी भ्वादिगणे 'ध्वृ हूर्च्छने' (धातुसूत्राङ्कः ६७०)[१] इत्यस्मादनन्तरं 'शु श्रु गतौ' (धा० सू० ६७१) इति, 'षु प्रसवैश्वर्य्ययोः' (धा० सू० ६७२) इत्यस्माच्च 'स्रु गतौ' (धा० सू० ६७३) इति पपाठ। 'श्रु श्रवणे' इत्याचार्यान्तरमतं धातुसूत्रं तत्र कुत्रापि नोपलभ्यते। 'श्रु गतौ' इत्यस्यैव चाश्रृणोवि, संश्रृणुते इति प्रत्युदाहरणदर्शनात् प्रतीयते यत्स्वामी परकीयं 'श्रु श्रवणे' इत्येतमेव धातुसूत्रं 'शु श्रु गतौ' इति सूत्रयामासाऽन्यथाकृत्वा।

धातुवृत्तिकृन्माधवश्च स्वीयधातुवृत्तौ 'ध्वृ हूर्च्छने' (तत्र धा० सू० ६५६) इत्यस्यानन्तरं 'स्रु गतौ' (धा० सू० ६६०) इति सूत्रे क्षीरस्वामिसम्मतं पाठमभिलक्ष्य काञ्चित् टिप्पणीं चकार। सा च चौखम्बातः प्रकाशिते पुस्तकेऽन्यथा, प्राच्यभारती प्रकाशन-कमच्छा-वाराणसीतः प्रकाशिते स्वामिद्वारिकादासशास्त्रिसम्पादिते चान्यथैव प्राप्यते। प्रस्तुते लघुकाये निबन्धेऽस्मिन्नसौ पाठभेद एवास्माकं विचारविषयः। तत्र कतरः पाठो ज्यायानिति जिज्ञासया प्रथमं प्रत्नतरं चौखम्बापाठमेवोद्धृत्य विचारयामः। स च पाठो निम्नप्रकारको लभ्यते—

'अत्र स्वामी तालव्यादिममुं पपाठ—श्रु श्रवण इति। एतत्तु दन्त्यादिरिति न्यासकारादयः। सर्वे विरुद्धमेव पठन्ति। श्रोत्रं श्रुतिः श्रवणमित्यादौ च लोकप्रसिद्धोऽर्थो न सङ्गच्छत इति यत्किञ्चिदेतत्।'

एष पाठः खलु विचारसहो नेति समातिष्ठमाना वयमिमानधोलिखितान् हेतूनुपस्थापयामः।

(क) क्षीरतरङ्गिण्याम् 'शु श्रु गतौ' इति (६७०) धातुसूत्रे 'आश्रृणोति' इति प्रभृतीन्युदाहरणानि समुपलभ्यन्ते, 'स्रु गतौ' इति च पृथक् (६७३) समुपलभ्यते। 'श्रु श्रवणे' इति पाठस्तु नैवोपलभ्यते। इति सर्वमवदातमुक्तमुपरिष्टात्। तेनापातत एव 'अत्र स्वामी तालव्यादिममुं पपाठ श्रु श्रवण इति' इति प्रतिज्ञैव निराधाराऽयुक्ताऽप्रमाणं चेति निष्पद्यते।

---

१. अत्र सर्वत्र श्रीमद्युधिष्ठिरमीमांसकसम्पादितायाः २०१४ वि०वत्सरे प्रकाशितायाः क्षीरतरङ्गिण्या एवोपयोगः कृत इति सन्दर्भसङ्केतास्तदनुरोधेनैव दीयन्ते।

(ख) 'एतत्तु दन्त्यादिरिति' इति वाक्ये च एतदिति नपुंसकस्य दन्त्यादिरिति पुल्लिङ्गस्य च कः केन कीदृक्षो वाऽन्वय इति स्पष्ट एव दोषः शेमुषीजुषाम्।

(ग) 'सर्वे विरुद्धमेव' इत्यादि वाक्ये के ते सर्वे ? किं तद् विरुद्धम् ? कस्य वा विरुद्धमिति न किञ्चिदपि समञ्चति मतिमतां मतिम्।

(घ) यथाप्रतिज्ञातं 'श्रु श्रवणे' इति पाठश्चेत्स्वामिसम्मतस्तर्हि 'श्रोत्रं श्रुतिः श्रवणमित्यादौ लोकप्रसिद्धोऽर्थः कथं न सङ्गच्छते' इति त्वेतद्ग्रन्थसम्पादकाः पण्डितऽ काण्डा एव सप्रश्रयमनुयोक्तव्याः।

तस्माच्चौखम्बास्थ एष पाठोऽध्येतॄन् किञ्चित्प्रत्याययितुमलं न वेति स्पष्टो वा दुष्टो वेति च निर्णयकर्माध्येतृष्वेव निक्षिप्य साम्प्रतं प्राच्यभारतीप्रकाशनपाठं विचारयितुं साम्प्रतमिति तदेव प्रकुर्मः।

चतुष्षष्ट्युत्तरैकोनविंशशततमे खैस्तवे वत्सरे प्रकाशितेऽस्मिन् पुस्तके एकषष्ट्युत्तरशतद्वयमिते पृष्ठे तावदेषोऽपपाठः श्रीमच्छास्त्रिणा द्वारिकादासेन निम्नरीत्या संशोधितो लभ्यते—

'अत्र स्वामी 'श्रु गतौ' इति तालव्यादिममुं पपाठ। श्रु श्रवण इत्येतं तु दन्त्यादिं न्यासकारादयः सर्वे विरुद्धमेव पठन्ति। स्रवणम्, स्रुतिः, श्रोत्रम्, श्रवणमित्यादौ च लोकप्रसिद्धोऽर्थो न सङ्गच्छत इति यत्किञ्चिदेतत्'।

अस्मिन्नुद्धृते 'श्रु गतौ' इति पाठे एकाङ्कसम्मितायां पादटिप्पण्यां श्रीशास्त्री 'क्षीरतरङ्गिण्यां नैतादृशः पाठ उपलभ्यते' इत्यभाणीत्, तच्चास्यानवलोकितक्षीरतरङ्गिणीमूलतामेव सुतरां द्योतयति, तत्रास्य पाठस्य साक्षादसन्दिग्धमुपलब्धत्वादक्षरमातृकामात्रपरिज्ञानवता बालेनापीति यत्किञ्चिदेतत्। अथवा 'शु श्रु गतौ' इति सूत्रस्योपलम्भात् केवलस्य 'श्रु गतौ' इति पाठस्यानुपलम्भाद् यथाकथञ्चिन्नेयः श्रीशास्त्री।

अत्र संस्करणे श्रीशास्त्रिणा चौखम्बास्थपाठस्य बहुधा स्वैरितया परिवर्तनं परिवर्धनं च कृतमिति तु तावत् प्रथमेक्षिकयैव निभालयितुं शक्यम्। एतावति कृतेऽपि विक्रमवेतालस्य तु सैव गतिरिति शोच्य एव श्रीमच्छास्त्रिणोऽनर्थकः श्रमः। तथाहि—

(अ) 'स्रवतिशृणोतिद्रवति…' ( अष्टाध्यायी ७।४।८१ ) इत्यत्र न्यासे 'सु स्रु गतौ, श्रु श्रवणे' इति पठितत्वाच्छ्रीशास्त्रिणः 'श्रु श्रवणे–इत्येतत्तु दन्त्यादि न्यासकारादयः।' इति द्वितीयं वाक्यं शास्त्रिणोऽदृष्टन्यासत्वं प्रकाशयन्निर्मूलमेव।

(आ) 'सर्वे विरुद्धमेव' इत्यादिवाक्ये चौखम्बास्थपाठे या असङ्गतयस्ता अत्रापि बोद्धव्याः। कस्य विरुद्धं किं विरुद्धमित्यादि सर्वमत्रापि तावत्तथैवानवदातम्। न हि केचित्

'स्रु श्रवणे' इति 'श्रु स्रवणे' इति वा 'श्रु गतौ' इति वा पठन्ति, यद्विरुद्धं स्यात्। तस्मादस्पष्टार्थकमेतद् वाक्यम्।

(इ) 'स्रवणम्, स्रुतिः, श्रोत्रम्, श्रुतिः' इत्यादिवाक्यं चोपरिष्टादुक्तभ्रमद्वयपरिणाम इति त्ववदातमेव। अत्र वाक्ये चौखम्बापाठेऽनुपलब्धौ 'स्रवणम् स्रुतिः' इति शब्दौ श्रीशास्त्रिणा स्वेच्छया प्रक्षिप्ताविति सुधीभिरवधेयम्। श्रीशास्त्रिमतेऽस्य वाक्यस्य क आशय इति तत्त्वतस्तु स एव जानीयात्, वयं तु तावदिदमभिप्रैमः क्षीरस्वामिमते यदि 'श्रु गतौ' इति पाठस्तर्हि श्रोत्रश्रुतिश्रवणेत्यादावाकर्णनम्, न्यासकारमते च यदि 'स्रु श्रवणे' इति पाठस्तदा स्रवणस्रुतिप्रभृतिषु प्रस्रवणं लोकसम्मतोऽर्थो न सङ्गच्छत इति एतन्मतद्वयं यत्किञ्चित्=एवमेव, नादरणीयमिति यावदिति।

अत्र क्षीरस्वामिपाठे तु युक्तिरियं सङ्गच्छते, परं श्रीमच्छास्त्रिकल्पनाप्रसूते न्याससम्मतस्वाभिमते पाठे तु निराधारैवेति सर्वथा स्पष्टार्थमित्यलमतिचर्वणया।

अस्मन्मते तु पाठ एवं स्यात्—'अत्र स्वामी तालव्यादिममुं पपाठ श्रु श्रवण इत्येतम्। दन्त्यादिरिति न्यासकारादयः सर्वे विरुद्धं पठन्ति। श्रोत्रं श्रुतिः श्रवणमित्यादौ च लोकप्रसिद्धोऽर्थो न सङ्गच्छत इति यत्किञ्चिदेतत्।'

अस्य पाठस्य योजना चैवं भवेत्—अत्र स्वामी अमुं प्रकरणान्तरस्थं श्रु श्रवणे इति तालव्यादिम् एतं ( स्रु गतौ इत्येतं श्रु गताविति ) पपाठ। दन्त्यादिः ( स्रु गतौ ) इति न्यासकारादयः सर्वे ( क्षीरस्वामिनः ) विरुद्धं पठन्ति। श्रु गतौ इति क्षीरसम्मते पाठे ) श्रोत्रं श्रुतिः श्रवणम् इत्यादौ चाकर्णनरूपो लोकप्रसिद्धोऽर्थो न सङ्गच्छत इति हेतोरेतत्क्षीरोक्तं यत्किञ्चिदुपेक्ष्यमिति यावदिति।

अत्र च वस्तुत्रयमुक्तं भवति। तद्यथा—

(क) क्षीरस्वामी परकीयमते 'श्रु श्रवणे' इति पठितमेव 'श्रु गतौ' इति मनुते। 'श्रु श्रवणे' इति तु नास्त्येवेत्युक्तचरमस्माभिः प्राक्। श्रु गताविति चापि 'श्रु श्रु गतौ' इति सूत्रे 'शवतिना सह पठितः' इति 'श्रु श्रवणे' इति पाठस्य सम्भवोऽपि नास्ति। तस्यैवं पाठे—आकूतं च शृणोति गच्छति शब्दं प्राप्नोतीति लक्षणयाऽऽकर्णनार्थोपलम्भाद् गत्यर्थकेन 'शवतिना सह पठितः' इति स्यात्। वस्तुतस्तु शवतेः पाठ उत्तरत्र स्रुगतावित्यत्र कर्तुमुचित इति क्षीरस्वामी चिन्त्य एव।

(ख) क्षीरस्वामिन इदं मतं च न्यासकारमैत्रेयबोपदेवादीनां सर्वेषां विरुद्धमित्युपेक्षितुं शक्यम् ।

(ग) श्रोत्रश्रुतिश्रवणप्रभृतिशब्दानां लोके गतेर्भिन्ने आकर्णनेऽर्थे वृत्त्याऽपि लोकविरुद्धत्वात् क्षीरस्वा मिमतं सुतरामुपेक्ष्यमिति सायणस्य ( माधवीयधातुवृत्तिकर्तुः ) आकूतम् ।

एवञ्चते वयं पश्यामो यदस्या वृत्तेरुभयोः संस्करणयोरत्र विषये चौखम्बासंस्करणस्य पाठे विरामचिह्नानामेवाशुद्धेः पाठो भ्रष्टः, प्राच्यभारतीसंस्करणे पुनः शब्दपरिवर्तनादिनाऽपि पाठो भ्रष्ट इति ॥

# संज्ञायां जन्याः ४.४.८२; जायाया निङ् ५.४.१३४

## इतिहासात्मिका तुलनात्मिका गुणदोषविवेचनात्मिका च समीक्षा

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री', सीनियर-रिसर्च-फेलो, वा० सं० वि० वि०, वाराणसी।

संज्ञायां जन्याः—'जनीशब्दाद् द्वितीयासमर्थाद् वहतीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति समुदायेन चेत् संज्ञा गम्यते' इति काशिकावृत्तिः। न कृता काशिकाकारेण निपातनचर्चा। कात्यायनीयवार्तिकपक्षस्तदभिमतः[१] प्रतीयते। न्यासकारेण तु सुस्पष्टं जनीशब्दादेव यत्प्रत्ययस्य पक्षः स्थिरीकृतो महाभाष्यकारस्य समाधानं च 'सर्वकालार्थं निपातनम् इत्येके' इति कृत्वा विचारार्थं परित्यक्तम्[२]। भट्टोजिदीक्षितैस्तु 'जन्या' इति निर्विसर्गः पाठः स्थापितः, व्याख्यायां चैकवचनमेव प्रदर्शितम्[३]। तच्च नागेशेन प्रत्याख्यातं 'पञ्चमीनिर्देशात्' इति वार्त्तिकांश-व्याख्यातुर्महाभाष्यकारस्य 'जनीशब्दादेषा पञ्चमी' इति वचनबलेन[४]। निपातनचर्चा द्वाभ्यामेव न कृता।

इह खलूदेत्ययं प्रश्नः—'संज्ञायां जन्याः' इति सूत्रे कस्तावन्निपातनावकाशः? इति। 'संज्ञायाम्=नाम्नि, जन्याः=जनीशब्दात् 'तद्वहति रथयुगप्रासङ्गम्—४.४.७६' तद्वहतीत्यर्थे 'प्राग्घिताद् यत्—४.४.७५' यत् प्रत्ययो भवति' इत्येष हि सरलः सूत्रार्थः संगच्छते। महाभाष्यकारैस्तु—'जनन्या जनीभावो निपात्यते यच्च प्रत्ययः' इति 'सर्वकालार्थः प्रत्ययविधिर्यथा विज्ञायेत' इति च निपातनप्रयोजनानि दर्शितानि[५]। न्यासकारेण महाभाष्यकारपक्षः

---

१. ॐ जन्या इति निपातनानर्थक्यं पञ्चमीनिर्देशात् ॐ जन्या इति निपातनमनर्थकम्। किं कारणम्? 'पञ्चमीनिर्देशात्'। जनीशब्दादेषा पञ्चमी—महाभाष्यम् ४.४.८२।

२. ननु च जनीशब्दादेव यद् विधेयः। सर्वकालार्थं निपातनमित्येके—काशिकाविवरणपञ्जिका ४.४.८२।

३. जनी=वधूः: तां वहति=प्रापयति—जन्या—वै० सिद्धान्तकौमुदी १६३४।

४. 'जन्याः' इति सविसर्गः पाठः। अत एव 'जनीशब्दादेषा पञ्चमी' इति भाष्यं संगच्छते। एतेन 'निर्विसर्गपाठं पठित्वा स्त्रियामेवास्य साधुत्वम्' इति वदन्तः परास्ताः। 'यातेति जन्यानवदत् कुमारी' इति कालिदासप्रयोगविरोधाच्च—बृहच्छब्देन्दुशेखरः (द्वितीयो भागः), १३८७ पृ०।

५. किं निपात्यते? जनन्या जनीभावो यच्च प्रत्ययः।.... इदं तर्हि प्रयोजनम्—सर्वकालः प्रत्यय-विधिर्यथा विज्ञायेत। जनीं वहन्ति जन्याः। जनीं वोढारो जन्याः। जनीमवाक्षुर्जन्या इति—महाभाष्यम् ४.४.८२

'केचित्' इति कृत्वोपस्थापितः[१]। चान्द्रव्याकरणे तु प्रयोजनद्वयं निपातनस्य दत्तम्—यद् बहुवचनं चेति[२]।

यत्प्रत्ययविशिष्टं परिनिष्ठितं 'जन्याः' इति शब्दं सूत्रे विज्ञाय निपातनचर्चा। यत्र यत्र सूत्रेषु विना प्रकृतिप्रत्ययचर्चया परिनिष्ठितः शब्दस्तत्र तत्र निपातनत्वं नाम[3]। यद्यपि कात्यायनेन 'जन्याः' इत्यत्र पञ्चम्येकवचनत्वमूहितम्, प्रकृतिश्च 'जनी' इति दर्शिता तथापि महाभाष्यकारस्याग्रहो निपातनविषयक एव। प्रयोजनं च सर्वकालार्थः प्रत्ययविधिर्यथा विज्ञायेतेति। 'तद्वहति' इत्यनुवृत्तिर्वर्तमानकालसूचिकैव। महाभाष्यकारानुसारेण 'संज्ञायां जन्याः' इत्यत्र त्रैकालिकक्रियासंबन्धः। ये भविष्यति काले जनीं वोढारस्तेऽपि जन्याः, भूतकालेऽवाक्षुस्तेऽपि तथा। अनुवृत्त्या नायमर्थो लभ्यत इति सर्वकालप्रत्ययविध्यर्थं निपातनम्। यद्यपि महाभाष्यकारः सर्वत्र बहुवचनान्तामेव प्रयुयुजे क्रियां तथापि निपातनाद् बहुवचनस्य न क्वापि चर्चा कृता। चान्द्रव्याकरणे निपातनस्य प्रयोजनद्वयं दर्शितम्—यद् बहुवचनं चेति[२]। जैनेन्द्रव्याकरणे तु जन्यधेनुष्यादीनां निपातनशब्दानाम् एकस्मिन्नेव सूत्रे निबन्धनम्[४]। हैमशाकटायनसारस्वतव्याकरणेषु नास्योपलब्धिः। प्रक्रियाकौमुद्यां नोल्लिखितं प्रकृतं सूत्रम्। संक्षिप्तसारव्याकरणे जनशब्दात् तद् वहतीत्यर्थे विधीयते यत् प्रत्ययः[५]। जनशब्दादपि जनीशब्दादपि च प्रत्ययः स्यादित्येतदर्थं निपातनमावश्यकम्। जनं वरं वहन्ति = श्वसुरगृहं प्रापयन्तीति जन्या वरपक्षीया

---

१. केचित् कर्तरि जायतेऽस्यां गर्भ इति कृत्यल्युटो बहुलम् ( ३.३.११३ ) इति ल्युटि जननशब्दाच्च ङीपि नकाराकारयोर्लोपेन साधयन्ति। ननु च जनीशब्दादेव यद् विधेयः सर्वकालार्थं निपातनमित्येके—काशिकाविवरणपञ्जिका ४.४.८२।

२. नाम्नि जन्याः ३.४.८१—संज्ञायां जनीशब्दाद् वधूवाचिनस्तद् वहतीत्यस्मिन् विषये यन्निपात्यते बहुवचनं च। जनीं वहन्ति जन्याः = नवोढाया ज्ञातिभृत्याः—चान्द्रव्याकरणम्।

३. तुलनीयानि सूत्राणीमानि—४.२.३६; ४.४.८९; ५.२.१३; १४; २३; ७१; ७३; ७४; ८०; ९०; ९१; ५.३.१७; २२; ३१; ३२; ६.१.१४३; १४४; १४५; १४६; १४७; १४८; १४९; १५०; १५२; १५३; १५४; १५५; १५६; १५७; ६.४.१७४; ८.२.१२; १३; १४ इत्थमन्यान्यपि।

४. जन्यधेनुष्यात्रवश्यवन्यगण्यपथ्यमूल्यहृद्यसतीर्थ्यगार्हपत्याः ३.३.१९५ जन्यादयः शब्दा निपात्यन्ते—जैनेन्द्रव्याकरणम्।

५. ८०७ जन्यान्नाम्नि। जन्यो जामातुः स्निग्धः सखा च—संक्षिप्तसारव्याकरणम्।

जना जामातुर्वयस्या इति वा[१]। वरपक्षीया जना एव वरं श्वसुरगृहं प्रापयन्ति न त्वेकको गच्छति वर इति परम्परा। विशेषतः श्वसुरमन्दिरान्तः स्निग्धैः सह गच्छति वरः। ते सखायो मध्ये मध्ये हासमपि कुर्वन्तीति वरस्निग्धार्थेऽपि रूढो जन्यशब्दः। वैयाकरणानामिहैव तात्पर्यमिति ते 'जन्याः=जामातुर्वयस्याः' इति व्याचख्युः। अन्ये तु कालिदासीयप्रयोगानुसारेण 'जामातुर्वयस्या' 'मातुर्वयस्या' वेत्येकवचनान्तमेव पेठुः[२]। नैषधमहाकाव्ये जन्यानाम्=वरस्निग्धानामयं हास-प्रकारः षोडशसर्गे द्रष्टव्यः[३]। पालिभाषायामयं कुलीनजनार्थकः[४] जञ्ञरूपेण प्रयुज्यते। प्राकृत-भाषायां तु जनहितकरार्थकौ जन्न-जण्ण-शब्दौ[५]। इह जनशब्दात् 'तस्मै हितम्' इत्यर्थे यत् प्रत्ययः (तुल०—ऋ० ४.३८.६)। प्रादेशिकीषु भाषास्वयं सर्वत्र वरयात्रार्थकः (वरपक्षीय-जनसमूहार्थकः) लभ्यते[६]। स्याद् विकासमार्गः प्राकृतभाषायाः जन्न <जन्नता <जण्णयत्ता

---

१. क आसं जन्याः के वराः क उ ज्येष्ठवरोऽभवत्—अथर्ववेदः—११.१०.१ = जन्याः = जनसम्बन्धिनो बान्धवा वधूवरपक्षीयाः [ सायणः ]।
जन्यार्थमन्नं द्रुपदेन राज्ञा विवाहहेतोरुपसंस्कृतं च—महाभारतम् १ १९४.१—वरपक्षीयजनार्थम् [ नीलकण्ठ— ]।

२. जनीं वहति जन्या = जामातुर्वयस्या। सा हि विवाहादिषु ( विहारादिष्विति पाठान्तरम् ) जामातृ-समीपं प्रापयति—काशिका ४.४.८२। जनीं, तां वहन्ति जन्याः = जामातुर्वयस्याः —काशिकाविवरण-पञ्जिका ४.४.८२। जनीं वहति जन्या = जामातुर्वयस्या। सा हि प्रणयकलहादौ वधूं जामातुः समीपं प्रापयति—शब्दकौस्तुभः ४.४.८२। प्रणयकलहादौ प्रियसमीपं प्रापयतीत्यर्थः। जन्या = मातुर्वयस्या ( 'जामातुर्वयस्या' इति पाठान्तरम् )—बृहच्छब्देन्दुशेखरः। अत्र न्यासकार एव बहुवचनान्तं पपाठ।

३. न्यधत्त जन्यस्य ततः पराऽकृपत्—नैषध० १६, ५१ = कस्यचिद् वरसखस्य [ मल्लि० ]।
कटाक्षणाज्जन्यजनैर्निजप्रजाः—नैषध० १६, ४८ = वरपक्षीयस्निग्धजनैः [ मल्लि० ]।

४. जञ्ञ ( विशेषण— )—मिलिन्द० १.३०—P. T. S. Pali English Dictionary.

५. जन्न—सूअगडांगसुत्त २,६,२; प्रश्नव्याकरणसूत्र १,२,४; पउमचरिअ ११,४६। जण्ण—धर्मसंग्रहणी १०० [ पाइअ-सद्द-महण्णवो ]।

६. जन्न ( स्त्री० ) The party which goes with the bridegroom at weddings, a marriage procession—Captain Stack : A Dictionary Sindhi & English.
लहँदा—जञ् ( स्त्री० ), गुज०-जान् ( स्त्री० ); खरोष्ठीशिलालेख०—जञत्र; पु० गुज०-जानत्र—R. L. Turner : A Comparative Dictionary Of The Indo-Aryan Languages.
नेपाली—जन्त = वरयात्रा—R. L. Turner : A Comparative & Etymological Dictionary Of The Nepali Language.

(<सं० जन्ययात्रा ) इति शब्दात्[१]। जन्यानाम् = वरपक्षीयाणां यात्रेत्ययं शब्दः प्रथमतो मालतीमाधवे भवभूतिकृति दृष्टिपथमायाति[२]। तदनु च नैषधे महाकाव्ये[३]।

जन्ययात्रां गच्छतीति जान्ययात्रिकः शब्दः * गच्छतौ परदारादिभ्यः * इति वार्तिक-गणपाठान्तर्गत इति वर्द्धमानो गणरत्नमहोदधौ[४]। यद्यपीतरे वैयाकरणाः काशिकाकृदादयो नेमं शब्दं तद्वार्तिकगणपाठान्तर्गतं पठन्ति, तथापि प्रादेशिकीषु भाषासु जान्ययात्रिकशब्दस्यापभ्रष्टानां रूपाणामुपलम्भात् तत्प्रामाणिकत्वम्[५]। गणरत्नमहोदधौ 'जन्ययात्रा' इत्यस्य यन्ययात्रेति 'जान्ययात्रिकः' इत्यस्य च यान्ययात्रिकः' इति पाठभेदो दृश्यते। नैषधमहाकाव्येऽपि 'जन्याः' ( ११, १५ ) इत्यस्य 'यान्याः' इति पाठान्तरम्। यद्यपि 'जन्ययात्रा' इति शब्दस्य स्वरूपं 'यज्ञयात्रा' इति शक्यते कल्पयितुम्, यज्ञार्थमेव विवाहस्य विधानात्। मध्यप्रदेशीयग्रामेष्वद्यापि विवाहस्य कृते 'धनस जग्य' इति शब्दस्य प्रयोगः। मन्ये, शब्दोऽयं जनकपुर्यां धनुर्भङ्गेन सीतारामविवाहात् प्रचलितः। तत्र यज्ञशब्दार्थो विवाहः ( धनुषि भग्ने यज्ञः = विवाहः। यथा संप्रति प्रेम्णि सति विवाहः—प्रेमविवाहः )। विना पत्नीं न संपद्यन्ते महायज्ञाः। विवाहात् प्रभृति महायज्ञानां परम्परा। शाबरभाष्यस्य विवरणात्मक आचार्यकुमारिलभट्टविरचिते तन्त्रवार्तिके

---

पंजाबी—जंज, जञ, जांज, जनेत ( स्त्री ) = वरयात्रा A wedding procession, A wedding party. "डॅंह दी धुप्प ते रात दी भुक्ख जंज दा गहणा" [ = दिवा चातपः, नक्तं च बुभुक्षेति जन्ययात्राभूषणम् ]—Panjabi English Dictionary.

हिन्दी—जनेत = वरयात्रा—हिन्दी शब्दसागर। पुरा० अवधी—अवध समीप पुनीत दिन पहुँची आय जनेत—तुलसिदासः।

१. जन्ना, जन्नत्ता ( दे० )—सुपासनाहचरिअ ३९९; उपदेशपद-टीका ७६८। जण्णयत्ता—उपदेशपद ६५४ [ पाइअसद्दमहण्णवो ]।

२. प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः॥ मालतीमा० २४०,११—जन्याः = वरस्य स्निग्धास्तेषां यात्रायाः प्रवेशः [ जगद्धरः ]।

३. स जन्ययात्रामुदितः किरीटवान्—नैषध० १५,७२—जन्यानाम् = वरस्निग्धानां स्वकीयस्नेहभाजनाना-मित्यर्थः। यात्रया = विवाहयात्रया [ मल्लि० ]।

४. परदारा गुरोस्तल्पं माथोत्तरपदं तथा। पदव्यनुपदाक्रन्दजन्ययात्राः प्रकीर्तिताः॥ ३७३। जान्ययात्रिकः।

५. पंजाबी—जनेती, जनेतिआ, जांजी one of a wedding party—Bhai Maya Singh : Panjabi English Dictionary.

नेपाली—जन्ति a member of wedding procession—R. L. Turner : C. E. Dictionary Of The Nepali Language.

देवतायतनयात्रायां सदाचारो दर्शितः[१]। एवं सत्यपि दृढतरप्रमाणाभावाज्जन्ययात्राशब्दस्य यज्ञयात्राशब्दोद्भवत्वे नास्माकमाग्रहः। जन्यानां वासार्थको जन्यवासशब्दोऽपि विज्ञायते, प्रादेशिकीषु भाषासु तद्भवानां शब्दानां प्रयोगात्[२]। निष्कर्षतो वरप्रापकाणामर्थे प्रयुक्तो जन्यशब्दः सुदृढमूलः।

द्वितीयतस्तावद् जन्यशब्दः कन्यापक्षीयजनार्थकोऽपि। तत्र हि जनीम् = कन्यां[3] वहन्ति = प्रापयन्ति वरसमीपमिति जन्याः = कन्यापक्षीया जनाः[४]। मातृवयस्या[५] स्वयंवरमण्डपं विवाहमण्डपं वा; जामातृवयस्या च वरसमीपं[६] प्रापयति जनीमिति सापि जन्येति शब्देन संबोध्यते। इयं परम्पराऽद्यापि भारते वर्षे प्रायः सर्वेषु प्रदेशेषु विद्यते। मल्लिनाथो रघुवंशटीकायां 'यातेति जन्यानवदत् कुमारी' इति पाठभेदं प्रादर्शयत्। तत्परवर्ती भट्टोजिदीक्षितस्तु पाठभेदं मूलतयोपास्थापयत्;[७] तन्न समीचीनम्, सुनन्दायाः षट्कृत्वः प्रयोगदर्शनात्; 'नीत्वा कुमारीम्'[८]

---

१. शक्रध्वजयात्रा, देवतायतनेषु यात्रा च सदाचारः—वा० १,३,३,७ [ २०५ पृ० ]।

२. सकल सुपास जहाँ दीन्हो जनवास ( कबीरः )। दीन्ह जाय जनवास सुपास किये सब—तुलसिदासः।
मराठी—जनिवसा, जानवसा, जानोसा [ = वरयात्रिकाणां निवासाय गृहादिकं कन्यापक्षीयैर्दत्तम् ]—मराठीव्युत्पत्तिकोश।
विहारी—जन्वाँसा, मैथि० जन्मासा—R. L. Turner: A Comparative Dictionary Of The Indo-Aryan Languages.

३. लौड़ोवानी ( पशइ-भाषाया उपभाषा )—जान् [ जोड़ा ] Girl, grown up daughter—R. L. Turner तदेव।

४. उभयांस्तेजनीष्वासजेज्जन्यान् कौमारिकांश्च। पूर्वे जन्याः स्युरपरं कौमरिकाः—वाराहगृह्यसूत्रम् १०, १३.
धनं न ब्रूयुः पुत्रपशवो नेति जन्याः—वागृ० १०, १५।
क आसं जन्याः के वराः क उ ज्येष्ठवरोऽभवत्—अथर्ववेदः ११.१०.१—जन्याः = जनसम्बन्धिनो बान्धवा वधूवरपक्षीयाः [ सायणः ]।
अथ जन्यानामेको ध्रुवाणामपां कलसं पूरयित्वा सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते—गोभिलगृह्यसूत्रम् २.१.१२—जन्यानाम् = कन्याज्ञातिजनानां मध्ये [ टिप्पणी ]।

५. याहीति जन्यामवदत् कुमारी—रघु० ६, ३० —जन्याम् = मातृसखीं सुनन्दाम् [ मल्लि० ]।

६. द्रष्ट० काशिका ४.४.८२; शब्दकौस्तुभः ४.४.८१।

७. कालिदासस्तु वध्वा यानवाहेष्वपि प्रायुङ्क्त—यातेति जन्यानवदत् कुमारीति—शब्दकौस्तुभः ४.४.८१

८. प्राक् संनिकर्षं मगधेश्वरस्य नीत्वा कुमारीमवदत् सुनन्दा—रघु० ६, २०।

इति कुमार्याः = जन्याः सुनन्दाद्वारकवहनार्थकत्वस्यापि प्रयोगाच्च यानवाहानामप्रसङ्गः। वैदुष्यं प्रकटयता महाकविना श्रीहर्षेण नूनं स्वयंवरस्थले बहुवचनो जन्यशब्दो यानवाहार्थकः प्रयुक्तः पाणिनेः 'संज्ञायां जन्याः' इति सूत्रे बहुवचनं गतार्थयता[१]। तेन स्वयमेव श्लोकान्तरेषु तत्पर्यायवाचित्वेन 'यानधुर्य-'[२] 'यानिवर्ग-' 'विमानवाह-' 'शिविकांशभृत्-' 'शिविकाभृत्-' इत्यादिशब्दानां विहितः प्रयोगः[२]। स्वयंवरस्थले शिविकाप्रयोग आश्चर्यकरः। विवाहोत्सवे श्वसुरगृहं प्रति गमनवेलायां वधूरवश्यं शिविकामधिरोहति संप्रत्यपीति यानवाहेषु बहुवचनान्त-जन्यशब्दप्रयोगो दुर्निवारः। प्रक्रियासर्वस्वकारो नारायणभट्टोऽपि जनीशिविकाधारिणि जन्यशब्द-प्रयोगमाह[३]। तत्रैकवचनान्तजन्यशब्दो जन्यसमूहपरः।

वरस्त्वाजीवनं जनीं वहतीति तदर्थेऽपि प्रयुज्यते जन्यशब्दः[४]। 'संज्ञायां जन्याः' इति सूत्रेण यत् प्रत्ययः स्वार्थेऽपि निपात्यते; जन्येति शब्दस्य कन्यावाचकत्वात्[५]। काशकृत्स्नधातु-व्याख्याने जननार्थके जन २/७८ धातौ जन्यः, जान्यः, जानश्चेत्येते त्रयः शब्दा उत्पादयितरि प्रोक्ताः कृदन्ताः। अपत्योत्पादकत्वस्य भावित्वाद् जनः = जनकः, जनी च = जननी[६]। इदमेव दर्शयितुं महाभाष्यकारेण निपातनप्रयोजनं जनन्या जनीभावत्वेन प्रदत्तम्[७]। एतदेव मतान्तर-रूपेण न्यासकारो ददर्श[८]। महाभाष्यटीकायामुद्योतकारो नागेशः प्राह—'भाष्ये जनन्या

१. जन्यास्ततः फणभृतामधिपं सुरोघान्—नैषध० ११, १५—जनीं वहन्तीति जन्याः = वधूभृत्याः [ मल्लि० ]।
जन्या जना हृदयवेदितयैव निन्युः—नैषध० ११, ३४।
राजन्यमन्यमथ जन्यजनः स निन्ये—नैषध० ११, ६५ = वाहकलोकः [ मल्लि० ]।

२. ११, १२; १३; २२; २३; ४७; ५६; ७१।

३. जनीशब्दाद् वहत्यर्थे नाम्नि यत् स्याज्जनी वधूः। जन्यस्तच्छिविकाधारी तां पतिं प्रापयन्नपि॥
तेन जन्यो वरसुहृज्जन्या चैवं वधूसखी। प्रक्रियासर्वस्वम् ४.४.८२।

४. य एवं विद्वानपि जन्येषु भवति—तैत्तिरीयसंहिता ६.१.६.६—कन्याया वरितारो जन्याः [भट्टभास्करः]।

५. जन्यां ददामीति—वाराहगृह्यसूत्रम् १० = जन्येति कन्यानाम [ टिप्पणी ]।
शालानेकखलाजिनातपफला जन्याजिनं पिप्पली—गणरत्नमहो० ३०२ श्लो०—जन्या = वधूस्तद्वाहिका ( तद्वाहका—पाभे० ) वा। तु० ज्येना ( रूसी) = जनी, पत्नी।

६. ऋ० ६.१८.८।

७. जनन्या जनीभावो निपात्यते—महाभाष्यम् ४.४.८२।

८. केचित् कर्तरि जायतेऽस्यां गर्भ इति कृत्यल्युटो बहुलम् ( ३.३.११३ ) इति ल्युटि जननशब्दाच्च ङीपि नकाराकारयोर्लोपेन साधयन्ति—काशिकाविवरणपञ्जिका ४.४.८२।

जनीभाव इति। योग्यतावशात् पुत्रजनन्यत्र जननीशब्देन गृह्यते' इति। विवाहस्य संतति-फलकत्वेन तदौचित्यम्। कन्या मण्डपं प्रविशन्त्येव जन्यात्वेन बोध्या। तस्याः सम्बन्धिनस्तु विवाहात् पूर्वम्, विवाहकाले, विवाहानन्तरं वा जन्या ज्ञेया इत्यत्रैव महाभाष्यकारस्य तात्पर्यम्।

वस्तुतः सूत्रमिदं वंशश्रेणी(Generation)प्रतिपादनपरम् इति रूढार्थत्वाद् अधिकार्थ-त्वाच्च निपातनमावश्यकम्। वंशश्रेण्यन्तर्गतत्वाद् भ्रातृव्योऽपि जनशब्देन गृह्यते। भ्रातृव्यस्य राज्याधिकारे प्राथम्यं पितृव्यस्य तु न तथेति भ्रातृव्यशब्दः संवृत्तः शत्रुवाचक इति जनशब्दस्यापि तत्र शत्रुवाचकत्वम्। एवं हि शत्रुवाचकजनसंबद्धो जन्यशब्दोऽपि तथा ज्ञेयः[१]। मतजनहलात् करणजल्पकर्षेषु ४.४.९७ इति पाणिन्युक्त-कलह-युद्धादिवाचकजन्यशब्दस्याप्यत्रैव गतार्थता। सम्बन्धार्थको यत् प्रत्यय ऋग्वेदे दृश्यते[२]। शत्रुवाचकजनशब्देन शत्रुजनपदग्रहोऽपि; तस्माच्च भावार्थको यत् प्रत्ययः[३]। क्वचिच्च जनपदवाचकजनशब्दात् स्वार्थिकोऽपि यत् प्रत्ययः[४]। क्वचिच्च जनशब्दात् 'तस्मै हितम्' इत्यर्थेऽपि यत् प्रत्ययो दृश्यते[५]। क्वचिच्च पृथग्जनवाचक-जनशब्दात् स्वार्थे यत् प्रत्ययोऽवगन्तव्यः[६]।

---

१. सपत्नो वै द्विषन्तो भ्रातृव्या जन्यानि—ऐब्रा० ८.२६ = जन्यानीत्यनेन सपत्ना एवाभिधीयन्ते। सपत्न-शब्दस्य व्याख्यानं द्विषन्तो भ्रातृव्या इति [ सायणः ]।
जन्या गावो नमेयुर्विन्देत मे जन्या गा राष्ट्रमिति यदेपा प्रतिपद्भवत्युपैनं जन्या गावो नमन्ति विन्दतेऽस्य जन्या गा राष्ट्रम्—ताण्ड्यब्राह्मणम् ६.१०.१९—अत्र जनशब्दः शत्रुजनसंवादी। जन्यास्तत्संबन्धिनो गावो मे नमेयुः = प्राप्नुयुरिति [ सायणः ]।

२. पातपतिर्जन्यादंहसः—ऋ० ४.५५.५ = जनसम्बन्धात् [ सायणः ]।

३. न्यस्मै द्युम्ना जन्या नमन्ताम्—ऋ० १०.४२.६—जन्याः = शत्रुजनपदभवानि [ सायणः ]।

४. दूतेव हव्या जन्या पुरुत्रा—ऋ० २.३९.१ = जनपदेषु [ सायणः ]।

५. स्रजं कृण्वानो जन्यो न शुभ्वा—ऋ. ४.३८.६ = जनेभ्यो हितः [ सायणः ]।
ब्रह्म जन्यं जोषि सुष्टुतिम्—ऋ. २.३७.६ = जनेभ्यो हितम् [ सायणः ]।
दूतो जन्येव मित्र्यः—ऋ० २.६.७—जन्यः = जनेभ्यो हितः [ सायणः ]।
जनं जनं जन्यो नाति मन्यते—ऋ० १०.९१.२ = जनहितः [ सायणः ]।

६. पुरस्तादासीनाय ब्रह्मणे प्रयच्छत्येतयैव गृहीत्वा दक्षिणत आसीनायौदुम्बरेण राजन्याय प्रयच्छत्येतयैव गृहीत्वा पश्चादासीनायाश्वत्थेन वैश्याय प्रयच्छत्येतयैव गृहीत्वोत्तरत आसीनाय नैयग्रोधेन जन्याय प्रयच्छति—बौधायनश्रौतसूत्रम् १२, ९ : ८।
औदुम्बरेण राजन्यः। ऊर्जमेवास्मिन्नन्नाद्यं दधाति। आश्वत्थेन वैश्यः। विशमेवास्मिन् पुष्टिं दधाति। नैयग्रोधेन जन्यः—तैत्तिरीयब्राह्मणम् १, ७, ८, ७ = इहोभयत्र जन्यशब्दः सुस्पष्टं शूद्रार्थकः [वागीशः]।

अस्मिन् सूत्रे संज्ञाशब्देन रूढिर्विवक्षिता[१]। 'संज्ञायां धेनुष्या' ४-४-८९ इति निपातनसूत्रगतसंज्ञापि रूढिः[२]। निपातनशब्दा रूढा एवेति निपातनसूत्रेषु 'संज्ञायाम्' इति न स्यादिति केषांचन मतं न समीचीनम्, निपातनशब्देषु रूढताया असार्वत्रिकत्वात्[३]। निपातनानि नाम यथा कथञ्चिद् व्युत्पाद्यानीति नावयवार्थे प्रत्यभिनिवेशः कर्तव्यः[४]।

जन्यशब्दस्यार्थानां प्रकृतीनां च बाहुल्याद् अननुसंधेयाच्च निपातनमिदमिति न केनापि वैयाकरणेन वास्तविकी गवेषणा कृता। भट्टोजिदीक्षितनागेशादीनां रघुवंशान्ता विचारणा। कलहार्थकस्य जन्यशब्दस्य न विहितः समावेशः 'संज्ञायां जन्याः' इत्यत्र पाणिनिना, तदर्थस्य प्रथितत्वादिति जल्पार्थे पृथक् प्रत्ययविधानम्। सूत्रे बहुवचनं तु नैकशब्दसूचकम्। यद्यप्युत्करादिगणे (४.२.९०) स्त्रीत्वबोधको 'जन्या' इति शब्द इति ४.४.८२ सूत्रेऽपि स्त्रीत्वबोधकजन्येतिशब्दस्य बहुवचनान्तत्वं स्यात् तथापि लक्ष्यग्रन्थेषु स्त्रीत्वबोधकस्य 'जन्याः' इति शब्दस्य प्रयोगादर्शनात् पुंस्त्वबोधकजन्यशब्दानां वेदाद्युपात्तानामविनिवेशाच्च न तथात्वम्।

जायाया निङ्—अनेन सूत्रेण महामुनिः पाणिनिर्विधत्ते समासान्तं निङादेशम्। जायान्तस्य बहुव्रीहेर्निङादेश इति। ङित्वादादेशोऽयम्[५]। चान्द्रव्याकरणे सरस्वतीकण्ठाभरणे चैतदभिन्नं सूत्रम्[६]। 'वधूजानिः' इत्येकः प्रयोगोऽतिरिक्तश्चान्द्रे। शाकटायने तु व्याकरणे जायाशब्दस्य स्थाने 'जानिः' इत्यादेशः। प्रियजानिश्चोदाहरणं तत्र[७]। वस्तुतो जायावाचको जानिशब्दः। पाणिनिना संक्षेपप्रियेण जायाशब्दे जानिशब्दे चोभयत्र 'जा' इत्यस्य तुल्यतामभिलक्ष्य निङादेशो विहितः। तदीयेन च व्याकरणेन नायं शब्दः सिद्ध्यति जनिशब्दं विहाय। 'जनिघसिभ्यामिण्'

---

१. जनीम्=वधूं वहन्ति जन्याः=जामातुर्वयस्या रूढाः—प्रयोगरत्नमालाव्याकरणम् ११९९।

२. संज्ञा हि रूढिर्विवक्षिता—बालमनोरमा।

३. शालीनकौपीने अधृष्टाकार्ययोः ५.२.४० नात्र रूढिः।

४. वस्तुतस्तु रूढिशब्दा एते कथंचिद् व्युत्पाद्यन्त इत्यवयवार्थे नाग्रहः कार्यः [ तत्त्वबोधिनी ]। एषामवयवार्थो न विचारणीयः [ बालमनोरमा ]—पारस्करप्रभृतीनि च संज्ञायाम् ६.१.१५७।

५. प्रक्रियाकौमुद्याः श्रीविट्ठलाचार्यकृतप्रसादाख्यटीकायाम्।

६. चान्द्रव्याकरणम् ४.४.१२२; सरस्वतीकण्ठाभरणम् ५.४.१६२।

७. शाकटायनप्रक्रियासंग्रहः—४३२ जायाया जानिः २.१.२१६; श्रीसिद्धहेमशब्दानुशासनम् ७.३.१६४।

( ४।१३० ) इत्यौणादिकेन सूत्रेण जातेऽपीणि 'जनिवध्योश्च' ( ७.३.३५ ) इति सूत्रं वृद्धि-विघातकम् । अतो जायाशब्दस्य स्थाने 'जानिः' इति सम्पूर्णादेशः स्यादपाणिनीय एव ।

जानिशब्दस्य मूले √जन् '( जनी ) प्रादुर्भावे' इति धातुः । जनि-जानादयः शब्दा अपि पाणिनिना नैव साधिताः । उत्पत्तिवाचको जायावाचकश्च जनिर्जनी वा शब्दः खल्वौणादिकः । जान-शब्दश्च भावे घञि सति 'जनिवध्योश्च' ( ७.३.३५ ) इति वृद्धिप्रतिषेधान्न साधुः । लोकमनुष्यादिवाचको जनशब्दोऽपि पचादिषु न पठितस्तेषामाकृतिगणत्वेऽपि प्रत्यक्षम् । जननी-जन्मेत्यादयोऽप्यौणादिकाः । जन्य-शब्दो यदन्तो निपातितः संज्ञायाम्[1] । युद्धवाचकः खलु जन्यशब्द औणादिकः ( ४।१११ ) जनवादार्थको जन्यशब्दः 'मतजनहलात् करणजल्पकर्षेषु' ( ४.४.९७ ) इति जनशब्दाद् ( औणादिकाद् ) यति साधुः । 'ऋहलोर्ण्यत्' ( ३.१.१२४ ) इत्यनेन ण्यति स्यात् साधुर्जन्यशब्दः, वृद्धिप्रतिषेधात्, किन्तु नैष संज्ञावाचको भवतीति । 'भव्यगेय-' ( ३.४.६८ ) इति निपातनसिद्धजन्यशब्दोऽपि तथा । एवं तावद् √जन्-धातु-सम्बद्धाः शब्दाः ख्यापयन्ति किमपि रहस्यजातम् ।

वेदादिषु जनो नाम जनयिता[2], जन्मवान्[3], संघः[4] ( लोकः[5] ), जातिः[6] इति । अत एव जातमात्रे प्रादुर्भूतमनुष्यमात्रे वाऽस्य प्रयोगेण पामरोऽपि तदर्थः[7] । इत्थमेव

---

१. संज्ञायां जन्याः ४.४.८२ ।

२. स यो न मुहे न मिथू जनः—ऋ० ६.१८.८ = जनयिता [ सायणः ] ।

३. जनो यः कश्चित्—ऋ० १.१८२.३ = जन्मवान् [ सायणः ] ।

४. जनो यः पज्रेभ्यः—ऋ० १.१२२.८ = देवजनो यश्च देवसंघः [ सायणः ] ।
मनो ददातु पितरो जनः—ऋ० १०.५७.५ = तेषां संघ इत्यर्थः [ सायणः ] ।
जनो दिव्यो गयेन—ऋ० १०.६३.१७ = देवगणः [ सायणः ] ।

५. अथ प्रवाते तुमुले निशि सुप्ते जने तथा । तदुपादीपयद् भीमः शेते यत्र पुरोचनः ॥ महाभारतम् १.१४९.९ । जनो लोके जगद्भेदे पृथग्जने—अनेकार्थतिल० २, १२० ।

६. जनः race ( Gk. γένος, Lat. genus )—T. Burrow : The Sanskrit Language, Pages 38.

७. जनो रातहव्यः—ऋ० १.५४.७ = जातः [ सायणः ] ।
न देवो नाध्रिगुर्जनः—ऋ० ८.९२.११ = प्रादुर्भूतो मनुष्योऽपि [ सायणः ] ।
जनो लोके महर्लोकात् परलोके च पामरे—मेदिनी, ८३ पृ० ।

जनिर्जनी वा=उत्पत्तिर्[1]जननी[2], जनयित्री वधूर्भार्येत्यादि। जानं[3] नाम जननम् इति जानिर्नाम जननी=भार्येति। इह वृद्धिप्रतिषेधाभावस्तु जानवद् विज्ञेयः। संक्षिप्तसारव्याकरणे[4] तु जायाया उत्तरे इत्, जायायाः स्थाने च 'जान' इत्यादेशो विधीयमान उत्पत्त्यर्थकं वैदिकं जानशब्दं स्मारयति।

स्थानी जायाशब्दोऽप्यौणादिकः पाणिन्यसाधितः[5]। स च पूर्वं नवोढार्थको[6] जनन-

---

१. स्थिरा चिज्जनीर्वहते सुभागाः—ऋ० १.१६७.७=जननशीलाः प्रजाः, वृष्ट्युत्पत्तीर्वा [ सायणः ]।
देवस्य भर्गः सहसो यतो जनिः—ऋ० १.१४१.१=उत्पन्नः [ सायणः ]।
पक्षे पक्षे जनिस्तव—हरिवंशपु० २०८,४०।
जनिकर्तुः प्रकृतिः—अष्टाध्या० १.४.३०।

२. जनन्या जनीभावो निपात्यते ( जननी>जनी )—महाभाष्यम् ४.४.८२=जायतेऽस्यां गर्भ इति जना वधूरुच्यते। 'जनिसहिभ्याम्' इतीण् प्रत्ययः। 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः [ कैयटः ]। योग्यतावशात् पुत्रजनन्यत्र जननीशब्देन गृह्यते [ नागेशः ]—गु० प्र० सं० २६४ पृ०।
पाथो न पायुं जनसी उभे अनु—ऋ० २.२.४=सर्वस्य जनयित्र्यौ [ सायणः ]।
तमीं गिरो जनयो न पत्न्यः—ऋ० १.१८६.७=फलस्योत्पादयित्र्यः [ सायणः ]।
अभि प्र दद्रुर्जनयो न गर्भम्—ऋ० ४.१९.५=जनन्यः। गर्भं पुत्रमिव [ सायणः ]।
पुत्रकृथे न जनयः—ऋ० ५.६१.३=अपत्योत्पादयित्र्यो योषितः [ सायणः ]।
आ रोहन्तु जनयो योनिमग्रे—ऋ० १०.१८.७=जनयन्त्यपत्यमिति जनयो भार्याः [ सायणः ]।
प्रति ष्या सूनरी जनी व्युच्छन्ती—ऋ० ४.५२.१=जनयित्री फलानाम् [ सायणः ]।
जनी सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदि—मेदिनी, नान्तवर्गे ६।

३. त्रीणि जाना परि भूषन्त्यस्य—ऋ० १.९५.३=जननानि जन्मानि [ सायणः ]।
को वेद जानमेषाम्—ऋ० ५.५३.१=उत्पत्तिम् [ सायणः ]।
अनद्धेव वाऽस्यातः पुरा जानं भवति—शब्रा० ३.२.१.४०=जन्म [ सायणः ]।

४. ४६५ जायाया इज्जानश्च—संक्षिप्तसारव्याकरणम्।

५. जायतेऽस्याम्। 'जनेर्यक्' ( उ०४।१११)। अत एव काशिकायाः संक्षिप्तसारव्याकरणस्य ( ४६५ ) च 'वृद्धजानिः' इत्युदाहरणं चिन्त्यम्।

६. अर्थमिद्वा उ अर्थिन आ जाया युवते पतिम्। तुञ्जाते वृष्ण्यं पयः परिदाय रसं दुहे वित्तं मे अस्य रोदसी॥ ऋ० १.१०५.२।

सामर्थ्यवत्यां गृहिण्यां जन्यां[1] : तदनु च जनन्यां[2] प्रयुक्तः, जननसामर्थ्ये सति भविष्यति तस्या जननीपदभाक्त्वात्[3] । अत एव जनीशब्दः कुमार्यर्थको[4] (नवोढा), जायार्थको[5] जनन्यर्थकश्च[6] ।

---

१. जायेदस्तं सेदु योनिस्तदित्वा युक्ता हरयो वहन्तु—ऋ० १.५३.४—जायेत् = जायैव । अस्तम् = गृहं भवति । 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' इति स्मृतेः । सेत् = सा जायैव । योनिः = पुरुषस्य मिश्रणस्थानम् [ सायणः ] । अपाः सोममस्तमिन्द्र प्र याहि कल्याणीर्जाया सुरणं गृहे ते—ऋ० ३.५३.६ ।

द्वन्द्वसमासे पाणिनिनापि जायाशब्दस्थाने दम्भावं निपात्य जायाशब्दस्य गृहवाचकत्वमङ्गीकृतम् ( २.२.३१ ) । दमशब्दो वेदेषु ( ऋ० १.१.८; १.६०.४; १.७५.५; दम्पतिम्—ऋ० १.१२७.८ ) गृहवाचको भारोपीयभाषास्वपि तथा—द्र० Walde vergl. Wörterbuch, I Band, pages 788.

पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते । जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥ मनु० ९,८ ।

२. कुमाउँनी—जइ (Jai) [used in abuse] 'mother'; हिन्दी—जा 'mother'; गुजराती—जाई—R. L. Turner : A Comparative Dictionary Of The Indo-Aryan Languages.

३. अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम्—रघु० २.१ = जायापदसामर्थ्यात् सुदक्षिणायाः पुत्रजननयोग्यत्वमनुसंधेयम् । तथा हि श्रुतिः—'पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥ तज्जाया जाया भवति यदस्यां जायते पुनः' [ मल्लि. ] ।

४. Laurowānī Dialect of Pashai—जान् [ जोड़ा ] 'girl, grown up daughtor.—R.L. Turner : A Comparative Dictionary Of The Indo-Aryan Languages.

५. पतिर्जनीनाम्—ऋ० १.६६.४ = जायानां कृतविवाहानाम् [ सायणः ] ।
जनिर्वरस्त्रीपत्योश्च—वैजयन्ती २२१,२७ ।
स्नुषा जनी पुत्रवधूर्वधूः स्यात्—अभिधानरत्नमाला २,३४९ ।
जनी स्नुषावनितयोः—अनेकार्थसंग्रहः २,२६२ ।
जन् (रव) 'newly married wife—R. L. Turner : A Comparative Dictionary Of The Indo-Aryan Languages.

६. प्रति ष्या सूनरी जनी व्युच्छन्ती—ऋ० ४,५२,१ = जनयित्री फलानाम् [ सायणः ] ।
[ जनिका—जातक १.१६ = माता ] ।
अभि प्र दद्रुर्जनयो न गर्भम्—ऋ० ४.१९.५ = जनन्यः [ सायणः ] ।

इत्थमेव जन्येति शब्दोऽपि कन्या[१]—वधू[२]--जननी[3]—वाचकः। एवमेव जानिशब्दोऽपि (कन्या) स्वसृ[४]—जाया[५]—जननी[६]—वाचकः। जन-जान-जनि-जानि-जननि-जन्य-शब्दा उत्पत्त्यर्थका अपि[७]। ऋग्वेदे प्रयुक्त आजानिशब्दो नास्ति बहुव्रीहिगर्भः। तत्र खल्वाजानिशब्द उत्पत्त्यर्थको द्रष्टव्यः। 'देवत्वमाजानमग्रे' इति यजुर्वेदीये (३१.१७) मन्त्रेऽपि तथा। यद्यपि पैप्पलादसंहितायां शब्दद्वयी समधिगम्यते पूर्वपदरूपेण प्रयुज्यमाना, तथापि तत्र स्थलयोः प्रश्न-वाचकचिह्ने संशीतिमुपस्थापयतः[८]। पालिभाषायां 'जानिपतयो' इति द्वन्द्वसमासे जानिशब्दः

---

१. जन्यां ददामीति—वाराहगृह्यसूत्रे १०=जन्येति कन्यानाम [ टिप्पणी ]।

२. नवोढाज्ञातिभृत्ययोः—मेदिनी, यान्तवर्गे २६।

३. ज्ञातेयं देहकर्ता तु तातो जनयिता पिता। जन्यो वप्रश्च सविता वप्ता जन्मार्थकारकः॥ कल्पद्रु-कोशः २१,१००। जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान्। त्रिपूत्पाद्यजनित्रोश्च—मेदिनी, यान्तवर्गे २६।

जन्यः, जान्यः, जानः—उत्पादयितरि ( द्र० जन जनने २।७८ )—काशकृत्स्नधातुव्याख्यानम्।

४. तिस्र आजानीरुपसस्ते अग्ने—ऋ० ३.१७.३=जनयित्र्यो मातरः। अथवा—अनुजाताः स्वसारः [ सायणः ]।

५. अवेस्ता—जइनि—Karl Brugmann : Comparative Grammar of the Indo-germanic Languages, II Volume, Pages 279.

ब्रजभाषा—जनियाँ=प्रियतमा, प्रेयसी—ब्रजभाषासूरकोष।

" —जानि=पत्नी, भार्या — " "।

६. द्र० व्यवहितपूर्वा टिप्पणी।

जानी तु मातरि—अभिधानचिन्तामणिकोशे शेषनाममालायां ११७ श्लोकः।

कूर्माचलप्रदेशे 'गङ्गोई' इत्युपभाषायाम्—जाण् (=सुनिपुणा धात्री) expert midwife—R. L. Turner : A Comparative Dictionary Of The Indo-Aryan Languages.

७. जननं च प्रजननं जननिश्च जनिः स्त्रियौ। उद्भवः संभवो भावो भवो जन्युश्च पुंस्यमी॥

जनी जनू जनुश्चास्त्री जीवो जन्यश्च पुंस्ययम्—कल्पद्रुकोशः ४१६,९८।

परा वीरास एतन मर्यासो भद्रजानयः—ऋ० ५.६१.४=भद्रः स्तुत्यो जानिर्जन्म येषां ते तथोक्ताः [ सायणः ]।

विजानिः—अथर्ववेदः ५.१७.१८; पैसं० ९.१६.१ ( तु० W. प्रभृ.; वैतु० [ पक्षे ] PW. BW. MW.=जन्मन् )।

सजन्यः—मैसं० १.२.१०—जन्य-=जन्मन् (√जन्+भावे यत् प्रत्ययः)।

८. यस्त्वाराय—प्रविवेश जातु जा नि वा द्ध त ?—पैसं० २.६७.१।

जा नी ह स्मि संस्तीर्य धेनवो गोपतिं यस् त्वा ददातु प्रथमस् स्वधावान्—पैसं० ५.३१.५।

पूर्वपदप्रयुक्तः[१]। तत्र संस्कृतभाषावद् बहुव्रीहिसमासगर्भो जानिशब्दो नोपलभ्यते। वैदिकभाषायां प्राज्यप्रयोगो बहुव्रीहिगर्भस्य जानिशब्दस्य[२] लौकिकसंस्कृतभाषायामपि तथा[3]। विभाषाधिकाराद् जायान्तस्यापि प्रयोगः[४]।

निष्कर्षतः √जन् धातुस्तद्व्युत्पन्नाश्च शब्दा वंशश्रेणीप्रतिपादकाः। जन-जनि-जनी-जान-जानि-जामि-जन्य-जन्यु-जात-जातिप्रभृतयः[५] शब्दा जननवाचकाः। ज्ञातिभृत्य-वरस्निग्ध-मातृवयस्यादीनां कुलान्तर्भावः। जननस्य=कुलस्य धारणे पूर्वोक्तानां सर्वेषामपेक्षणीयता। ग्रीकादिभाषासु संस्कृतभाषागत-जकारस्य प्रायः कण्ठ्यवर्णत्वेन समधिगमः[६]। केषांचन मतेन

---

१. जानिपतयो—अंगुत्तरनिकाय—२.५९।

२. अन्तर्योनेव चरति द्विजानिः—ऋ० १०.१०१.११=द्विजायः [ सायणः ]।
अस्या इच्छन्नग्रुवै पतिमुत जायामजानये—अथर्ववेदः ६.६०.१=जायारहिताय। न विद्यते जाया यस्येति विगृह्य [ साय० ]।
महाँ इव युवजानिः—ऋ० ८.२.१९=युवतिर्जाया यस्य स तथोक्तः [ सायणः ]।
विजानि [ र् ] यत्र ब्राह्मणो रात्रिं वसति पापया—पैसं० ९.१६.१; अथर्ववेदः ५.१७.१८।
सुजानयः—पैसं० १७.३३.२ [ 'सपत्नीः' इति पाठभेदः ]।
सप्तजानयः—कौसं० २.४७५ [ सप्तजामय इति पाठभेदः ]।
सुमज्जानये विष्णवे ददाशति—ऋ० १.१५६.२=स्वयमेवोत्पन्नाय। जनेरौणादिक इण्। सुमत् स्वयमित्यर्थः ( निरु० ६.२२ ) इति यास्कः। यद्वा—सुतरां मादयति सुमत्, तादृशी जाया यस्य स तथोक्तः [ सायणः ]।

३. अनन्यजानेः सैवासीद् यस्माज्जाया हिरण्मयी—रघु० १५.६१=नास्त्यन्या जाया यस्य तस्य [ मल्लि० ]।
सजानि—राजतरङ्गिणी ( ed. calc. ) १.२५८ ( 'सजामि'—इति पाठभेदः Troyer )।
भूजानिः—नैषध० १,२; रतिजानिवीरः—नैषध० ७,८६।

४. द्विजायः—सायणः ( ऋ० १०.१०१.११ )।

५. जानुशब्दस्तु √ज्ञा धातुतो विज्ञेयः, ऊर्ध्वज्ञु-संज्ञुप्रभृतिषु तथोपलब्धेः। Knee इत्यादिष्वपि तथाधिगमः।

६. अर्मेनियन्-भाषायां जायावाचकस्य जानिशब्दस्य तुल्यः शब्दः केन ( keṅ ) [ quenā ] इति। अस्य बहुवचने 'कनइ-ख्' ( kanai-kh ) इति [ kh इति बहुवचनप्रत्ययः ] ग्रीकभाषायां गुनी ( γυνή ) इति। गाथिकभाषायां क्विनो (qino)=एँग्लो-सैक्सन्—क्वेने ( cwene ), पुरातन-जर्मनभाषायां कुऐने (quene), कॉनै (kone) इति च, पुरातननार्दियन्-भाषायां कॉन (kona) इति, गाथिकभाषायां कीन्स् (qēns) [ तुल० अवेस्ता Jāni -, सं० जानि- ]; पु. नार्दि. कीन् (kuaén),

तन्मूलं न संस्कृतभाषातो बहिः। अत एव कान्तावाचकस्य कना-शब्दस्य[१] सत्ता जनीशब्द-मूलिकेति विन्यासः। कल्पितभारोपीयभाषायां जनि-जान्यादीनां मूलशब्दः * क्वेना (quena) इति। अवेस्ताभाषायां 'केना' (qənā), ग्ना (γnā) इति शब्दद्वयी पत्न्यभिधेया स्त्रीवाचिका च। जायार्थकस्य जनिशब्दस्य तुल्यः शब्दः—अवेस्ताभाषायां 'जनि' (Jani), नवपर्सियन्-भाषायां च जन् (zan) इति। जायावाचकस्य जानिशब्दस्य तुल्यः शब्दः—अवेस्ताभाषायां 'जानि' (Jāni) इति, पुरातनचर्चस्लावोनिकभाषायां च जेना (Zena)=भार्या; जेनिना (Zenina)=भार्यासदृशी[२]। कुरुवर्षीय (रूसी) भाषायां संप्रत्यपि जायावाचकस्य जानि-शब्दस्य तुल्यः शब्दः 'ज्येना' (Jyenā) इति। तत्र बहुवचनेऽयं 'ज्योनी' (Jyoni) इति भवति। जनी (=नारी-वाच्येऽप्येष एव ज्येनाशब्दो 'ज्येन्श्चिना' (Jyenshchina) इति रूपेणोपतिष्ठते। संबन्धार्थक-(स्क्)-तद्धितप्रत्ययत्वेन 'ज्येन्स्क् (Jyensk)=नारीसंबन्धिन्—इति, संज्ञासूचक-'त्'-प्रत्ययत्वेन ज्येनात् (Jyenat), बहुवचने—ज्येनाति (Jyenati)=विवाहितः पुरुष इति, तिङन्तरूपेण 'ज्येनिशस्या' (Jyenishsya)='पुरुषस्य विवाहने' इति ज्येनागर्भाः शब्दा दृश्यन्ते[3]।

प्रागार्यकाले (ं) इति तालव्यस्वरात् पूर्ववर्ती क् (q) इति वर्णस्तालव्यत्वं प्रपद्यते स्म; ई (ē) इति वर्णश्च दीर्घाकारेण विपरिणमते स्मेति कार्ल्-ब्रुगमन्-महाशयः[४]। गाथिकादि-

---

क्वान् (Kvān), एँग्लो-सैक्सन्—क्वीन् (cwén), पुरातन-सैक्सन्-भाषायां च—कुआन् (Kuān) इति—Alois Walde. Vergleichendes Wörterbuch der Indogermanischen Sprachen, I Band, Pages 681.

१. पुनस्तदा वृहति यत् कनाया दुहितुः—ऋ० १०.६७.५=कान्तायाः [ सायणः ]।

२. व्यवहितपूर्वा टिप्पणी द्र०।

३. रूसी : प्रारम्भिक पाठ्यक्रम २ ( नीना पतापोवा )—शब्दसूची।

४. The change from ē to ā took place in the Prim. Aryanperiod, after the 'vowel (like Indg.e) had Palatalised the preceding q-sounds, e. g. सं० जानि-स् 'wife, spouse)—Karl Brugmann : Comparative Grammar of the Indogermanic Languages, I Volume, pages 62.

भाषाणां कीन्स्-प्रभृतिभिः कण्ठ्यादिवर्णविशिष्टैः शब्दैर्जानिशब्दप्रक्रमे तुलना नूनं विधेया[१]। जानिशब्दगत इकारो ग्रीकादिभाषासु 'अइ' (ai)—रूपेण दृश्यते[२]।

वस्तुतस्तु प्राप्तवैदिकवाङ्मये जानिशब्द 'आ' इत्यव्ययमन्तरा न क्वापि स्वातन्त्र्येण प्रयुक्तो जायार्थतया। भारोपीयभाषासु जायार्थतया प्रयुज्यमानस्यापि लौकिकसंस्कृतसाहित्येऽसमस्तस्य प्रयोगानुपलम्भाद् महामुनेः पाणिनेर्महती सूक्ष्मेक्षिका। वैदिककाले नूनमस्य जायाभिधेयस्य जानिशब्दस्य स्वातन्त्र्येण प्रयोगः; भारतीयजनभाषासु विश्वार्यभाषासु च तस्य विद्यमानत्वात्।

# सहायकग्रन्थानां सूची

१. अथर्ववेदः (शौनकीयः) सायणभाष्यसमेतः (द्वितीयो भागः), विश्वेश्वरानन्दवैदिकशोधसंस्थानम्, होशिआरपुरम्, २०१८ वि०।

„ „ „ प्रकाशकः—ऋषिकुमारपण्डितरामचन्द्रशर्मा, मुरादाबाद, १९८७ वि०।

२. अनेकार्थतिलकः (महीपविरचितः)—Deccan College Postgraduate & Research Institute, Poona 1947.

३. अनेकार्थसंग्रहः (श्रीहेमचन्द्रसूरिप्रणीतः), Edited by Theodor Zachariae, Vienna, 1993.

४. अभिधानचिन्तामणिकोशः (हेमचन्द्राचार्यविरचितः), अहमदाबाद, २०१३ वि०।

५. अभिधानरत्नमाला (हलायुधविरचिता), Edited by T. H. Aufrecht, Lahore, 1928.

---

१. ८७ पृष्ठस्था पष्ठटिप्पणी द्रष्टव्या।

२. i (इ) in Jāni Jani schwundstufe zu ai in Gr. γυvaik–arm. (pl) kanai–kh.—Wackernagel : Altindische Grammatik, Band II, 2; § 193, pages 307.

६. Altindische Grammatik (Jakob Wackernagel), Band II, 2—Goöttingen, 1954.

७. ऋग्वेदसंहिता (सायणभाष्ययुता)—वैदिकसंशोधनमण्डलम्, पुण्यपत्तनम्, १६३३—१६५१ ई० ।

८. A Comparative And Etymological Dictionary of the Nepali Language–by R. L. Turner, London, 1931.

९. A Comparative Dictionary of Indo-Aryan Languages—by R. L. Turner, London, 1966.

१०. ऐतरेयब्राह्मणम् (सायणभाष्यविराजितम्), आनन्दाश्रममुद्रणालयः, १६३१ ई० ।

११. Comparative Grammar of the Indogermanic Languages, volume, I New-york, 1888; II vol., 1891.

१२. कल्पद्रुकोशः (केशवकृतः)—Oriental Institute, Baroda, 1928.

१३. काशकृत्स्नधातुव्याख्यानम्, भारतीयप्राच्यविद्याप्रतिष्ठानम्, अजमेर, २०२२ वि० ।

१४. काशिकाविवरणपञ्जिका (श्रीजिनेन्द्रबुद्धिविरचिता) प्रथमखण्डः, द्वितीयो भागः, राजशाही, १६१६ ई० ।

१५. काशिकावृत्तिः (वामनजयादित्यविरचिता)—चौखम्बासंस्कृतपुस्तकालयः, १६५२ ई० ।

१६. गणरत्नमहोदधिः (वर्द्धमानविरचितः)—Edited by Julius Eggeling, Motilal Banarsidass, 1963.

१७. गोभिलगृह्यसूत्रम् (भट्टनारायणविरचितभाष्ययुतम्), चिन्तामणिभट्टाचार्यसंपादितम्, कलिकाता, १६३६ ई० ।

१८. चान्द्रव्याकरणम् (चन्द्रगोनिप्रणीतम्)—Deccan College Postgraduate & Research Institute, Poona, 1953.

१९. जैनेन्द्रव्याकरणम् (अभयनन्दिविरचितम्), भारतीय-ज्ञान-पीठ, काशी, १६५६ ई० ।

२०. Dictionary Sindhi & English—by captain George Stack, Bombay, 1855.

२१. ताण्ड्यमहाब्राह्मणम् (सायणाचार्यविरचितभाष्यसहितम्), प्रथमो भागः, चौखम्बासंस्कृत-सीरिज़, १६३५ ई० ।

२२. तैत्तिरीयब्राह्मणम् , आनन्दाश्रममुद्रणालयः, १९३४ ई० ।
२३. तैत्तिरीयसंहिता (भट्टभास्करमिश्रविरचितभाष्यसहिता), दशमःखण्डः,मैसूर, १८९७ ई० ।
२४. The Sanskrit Language, by T. Burrow, London.
२५. नैषधमहाकाव्यम् (जीवातुव्याख्यासमलङ्कृतम् )—चौखम्बा–संस्कृत–पुस्तकालयः, १९५४ ई० ।
२६. Panjabi English Dictionary—by Bhai Maya Singh, Patiala, 1961.
२७. पाइअ सद्द-महण्णवो ( हरगोविन्ददास–त्रिकमचन्द सेठ )—प्राकृत ग्रन्थ परिषद्, वाराणसी, १९६३ ई० ।
२८. P. T. S. Pali English Dictionary, by T. W. Rhys Davids & William Stede, 1921.
२९. पैप्पलादसंहिता ( डॉ० रघुवीरसम्पादिता ), सरस्वतीविहारः, लवपुरम् , १९९३ वि०; १९९६ वि० ।
३०. प्रक्रियाकौमुदी (श्रीरामचन्द्राचार्यप्रणीता) पूर्वार्धम् , भण्डारकरप्राच्यविद्यानुसंधानशाला, पूना, १९२५ ई० ।
३१. प्रक्रियासर्वस्वम् (तृतीयो भागः)—नारायणभट्टविरचितम् , त्रिवेन्द्रम् , १९४८ ई० ।
३२. प्रयोगरत्नमालाव्याकरणम् ( पुरुषोत्तमविद्यावागीशविरचितम् )—कालिकाता, शकाब्दः १८१५ ।
३३. Vergleichendes Wörterbuch der Indogermanischen Sprachen herausgegeben und bearbeitet—Von Julius Pokorny I Band Berlin und Leipzig, 1930.
३४. बृहच्छब्देन्दुशेखरः ( नागेशभट्टविरचितः ) [ द्वितीयो भागः ], वा० सं० वि० वि०, वाराणसी, १९६० ई०।
३५. बौधायनश्रौतसूत्रम्—Edited by Dr. W. Caland, vol. II, Calcutta, 1907.
३६. मनुस्मृतिः ( मन्वर्थमुक्तावलीसहिता ), चौखम्बासंस्कृतसीरीज़, १९३५ ई० ।
३७. मराठी व्युत्पत्तिकोश ( कृष्णाजी पाण्डुरङ्ग कुलकर्णी ), मुम्बापुरी, १९४६ ई० ।

३८. महाभारतम्—( आदिपर्वमात्रम् ) भारतभावदीपिकाख्यटीकायुतम्, चित्रशालामुद्रणालयः, पूना,······ई० ।

३९. महाभाष्यम्—कीलहार्नसंस्करणम्, पूना, १९६५ ई० ।

„ „ ( चतुर्थोऽध्यायः ) गुरुप्रसादसंस्करणम्, वाराणसी, १९३९ ई० ।

४०. मालतीमाधवम्—( भवभूतिप्रणीतम् ) जगद्धरटीकासमेतम्, रामकृष्णगोपालभण्डारकर-संपादितम्, मुम्बापुरी, १९०५ ई० ।

४१. मीमांसाकोषः ( षष्ठो भागः )—केवलानन्दसरस्वतीसंपादितः, १९६२ ई० ।

४२. मेदिनीकोशः ( मेदिनिकरनिर्मितः )—चौखम्बा-संस्कृत-पुस्तकालयः, १९४० ई० ।

४३. रघुवंशमहाकाव्यम्—( मल्लिनाथविरचितटीकाविराजितम् ), श्रीवेङ्कटेश्वरमुद्रणयन्त्रालयः, मुम्बयी, १९६९ वि० ।

४४. रूसी : प्रारंभिक पाठ्यक्रम २ ( नीना पतापोवा ), मास्को १९६० ई० ।

४५. वाराहगृह्यसूत्रम्—Edited by Sama Sastry, Baroda, 1921.

„ „ —रघुवीरसंपादितम्, लाहौर, १९३२ ई० ।

४६. वैजयन्ती ( यादवप्रकाशविरचिता )—Edited by Gustav Oppert, Madras 1893.

४७. वैदिकपदानुक्रमकोशः ( विश्वबन्धुसंपादितः )—विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्, होशिआरपुरम् ।

४८. वैयाकरणसिद्धान्तकौमुदी ( भट्टोजिदीक्षितविरचिता ) तत्त्वबोधिनीसमेता, निर्णयसागर-मुद्रणयन्त्रालयः, १९२९ ई० ।

„ „ ( „ „ ) बालमनोरमा-तत्त्वबोधिनीसमेता, मोतीलाल-बनारसीदास, १९६४ ई० ।

४९. व्रजभाषा सूरकोष ( चतुर्थखण्ड )—लखनऊ विश्वविद्यालय ।

५०. शतपथब्राह्मणम् ( सायणभाष्यसहितम् ), द्वितीयो भागः—गङ्गाविष्णु श्रीकृष्णदास, कल्याण-बम्बई, १९४० ई० ।

५१. शब्दकल्पद्रुमकोशः ( राधाकान्तदेवविरचितः )—मोतीलाल बनारसीदास, १९६१ ई० ।

५२. शब्दकौस्तुभः ( भट्टोजिदीक्षितविरचितः )—चौखम्बा संस्कृत सीरिज़ ।

५३. शाकटायनप्रक्रियासंग्रहः (श्रीमदभयचन्द्रसूरिविरचितः)—ज्येष्ठारामसुकुन्दजीशर्मा, मुम्बापुरी, १९०७ ई० ।

५४. संक्षिप्तसारव्याकरणम् (क्रमदीश्वरविरचितम्)—the Poor's Library, Calcutta.

५५. Sanskrit Wörterbuch—otto Böhtlingk und Rudolf Roth.

५६. सरस्वतीकण्ठाभरणम् (भोजदेवप्रणीतम्)—मद्रपुरीयविश्वविद्यालयः, १९३७ ई० ।

५७. सिद्धहेमशब्दानुशासनम् (हेमचन्द्राचार्यविरचितम्)—यशोविजयबनारसजैन-पाठशाला, १९०५ ई० ।

५८. हिन्दी शब्दसागर—

# ग्रन्थसमालोचनम्

**काशिकावृत्तिः, न्यास-पदमञ्जरीसहिता**

प्रथम-द्वितीयभागौ प्रकाशितौ। सम्पादकौ स्वामी द्वारिकादासः शास्त्री, पं० कालिकाप्रसादशुक्लश्च। मूल्यम् २५) प्रतिभागं ग्रन्थागारसंस्करणस्य; २०) प्रतिभागं छात्रसंस्करणस्य। प्रकाशकः—प्राच्यभारतीप्रकाशनम्, वाराणसी।

सुमहदिदं प्रमोदस्थानं यद् व्याकरणशास्त्रनिष्णाताभ्यां सम्पादकाभ्यां काशिकावृत्तिः सुसम्पाद्य प्रकाशिता। भागद्वये ३।२ पादपर्यन्तांशः प्रकाशितः; अवशिष्टोंऽशः यथाकालमचिरात् प्रकाशमेष्यति।

स्पष्टमिदं प्रतीयते यत् पूर्वप्रकाशितयोर्न्यासपदमञ्जरीग्रन्थयोर्बहवो भ्रष्टाः पाठाः संशोधिताः; विरामचिह्नानि च यथायथं प्रायेण सन्निविष्टान्यस्मिन् संस्करणे। मुद्रणसौष्ठवमपि परिलक्ष्यते। काशिकायाः पाठः प्रायेण शुद्ध एव लक्ष्यते। काशिकायास्त्रीणि संस्करणानि प्रसिद्धानि; एतेषु प्रमादपाठा अन्तराऽन्तराऽवलोक्यन्ते। शोभितमिश्रसंपादितकाशिकायाः पाठः श्रेयानिति विज्ञायते। आलोच्यमानसंस्करणेऽपि काशिकापाठः प्रशस्य एव।

न्यासे पदमञ्जर्यां च काशिकापाठभेदा दृश्यन्ते क्वचित्। एतादृशेषु स्थलेषु यदि सर्वत्र सम्पादकटिप्पणी पाठभेदप्रदर्शिका दीयेत, तर्हि पाठकानां सौकर्यं स्यादिति मन्ये।

समीक्षकधर्मं परिपालयद्भिरस्माभिर्ग्रन्थसम्पादनमधिकृत्य किमपि विचार्यते—

(१) यावदवधारणे (२।१।८) इति सूत्रस्य पदमञ्जर्याम् 'यावदित्यव्ययं चास्ति...' इत्यादिकं यद् वाक्यं गद्यरूपेण मुद्रितं तत् पद्यबद्धमेव (अनुष्टुप्-छन्दसा विरचितम्) इति व्यक्तं प्रतीयते, अतः संस्करणान्तरे कृते सति दोषोऽयमपाकरणीयः।

(२) उपपराभ्याम् (१।३।३९) इत्यत्र काशिकायां पठ्यते—उप-परापूर्वात् क्रमतेर्वृत्त्यादिषु अर्थेषु...। अत्र क्रमतेरिति पदं प्रामादिकम्। इक्श्तिपौ धातुनिर्देशे इत्यनेनात्र श्तिप्; ततश्च 'क्रमः परस्मैपदेषु' इत्यनेन दीर्घे सति 'क्रामतेः' इति स्यादेव।

(३) चक्षिङः ख्याञ् ( २।४।५४ ) इत्यत्र वार्त्तिकं पठ्यते—"असनयोश्च प्रतिषेधो वक्तव्यः। नृचक्षा राक्षसाः" इति। अत्र 'नृचक्षसः राक्षसाः' अथवा 'नृचक्षा राक्षसः' इति पाठः स्यात्। नृचक्षाः—इत्यत्र असुन्प्रत्ययः, अत्वसन्तस्य चाधातोरिति दीर्घः, अत एव एकवचनान्तोऽयं शब्द इति विज्ञेयम्।

अवश्यं संग्राह्यमिदं ग्रन्थरत्नं बुधैश्छात्रैश्च। सर्वेषां धन्यवादार्हौ सम्पादकौ प्रकाशकश्चास्य ग्रन्थस्येति विज्ञाप्य विरमामि।

रामशङ्करभट्टाचार्यः

**वेदान्तप्रबोधः**—सत्यबोधाश्रमप्रणीतः। अन्वेषणोपलब्धप्रकरणग्रन्थः। प्रकाशकः—श्रीपीताम्बरासंस्कृतपरिषद्, दतिया, मध्यप्रदेशः। सम्पादकोऽनुवादकश्च—डॉ० शिवशरणशर्मा द्विवेदः। मूल्यम्-रूप्यकद्वयम्। पृष्ठसंख्या २०० परिमिता।

एम० ए०-डी० फिल०—इत्युपाधिजुषा डॉ० शिवशरणशर्मणा शास्त्रिणा राष्ट्रभाषानुवादेन परिचयात्मकविवरणेन च साकं सम्पादितः, दतियास्थश्रीपीताम्बरासंस्कृतपरिषदा च प्रकाशित एष शाङ्करवेदान्तदर्शनस्य प्रकरणग्रन्थोऽद्यावध्यनुपलब्ध आसीत्। प्रकरणग्रन्थेऽस्मिन् अद्वैतवेदान्तस्य प्रायः सर्वे विषयाः सरलया प्राञ्जलया च भाषया शैल्या च प्रतिपादिताः सन्ति। वेदान्तपरिभाषा न्यायशैलीमनुसरन्ती अद्वैतवेदान्ते प्रविविक्षूणां प्रायो दुरूहा भवति। सदानन्देन विरचितो वेदान्तसारश्चातिसंक्षिप्ततया न क्रोडीकरोति सर्वान् विषयानद्वैतवेदान्तदर्शनस्य। अस्मिन् ग्रन्थे तु सरलया भाषया संक्षेपेण षड्विधप्रमाणनिरूपणं प्रामाण्यवादविचारश्च व्यधायि, वाचस्पतिमिश्रश्रीप्रकाशात्मप्रभृतीनां प्राचामाचार्याणां सिद्धान्ताः संक्षेपेण प्रदर्शिताः। अपि च, नात्र प्राधान्येन प्रमाणविचार एव प्रस्तुतः, किन्तु प्रमेयनिरूपणावसरे तत्त्वंपदार्थ-माया-अविद्या-द्विविधसृष्टि-अध्यारोप-अपवाद-साधन-वैराग्य-संन्यास-समाधि-मुक्ति-ब्रह्मसाक्षात्कारप्रभृतयः सर्वे प्रमेयाश्चात्र तयैव शैल्या प्रस्तुतीकृताः। एवं च ग्रन्थस्यास्य महत्त्वं स्वतः सिद्धम्।

पीताम्बरापीठाधीशानां स्वामिश्रीवनखण्डेश्वरमहाराजानामुद्यमेन ग्रन्थस्यास्योद्धारः समजनीति स्वामिमहोदयाः, पीताम्बरासंस्कृतपरिषद्, अस्य ग्रन्थस्य सम्पादकाश्च नितान्तमभिनन्दनार्हाः। राष्ट्रभाषानुवादेन साकं प्रकाशनेनास्य ग्रन्थस्य रसास्वादः संस्कृतानभिज्ञैरपि जिज्ञासुभिः कर्तुं पार्येत।

एकस्या एव मातृकाया उपलम्भेन सत्यं सम्पादकेन ग्रन्थसंशोधनेऽतीवायासोऽनुभूतः स्यात्। अथाप्युद्धृतवाक्यानामाकरस्थलनिर्देशे विशिष्टानां पदानां टिप्पणीप्रदानादिना स्पष्टीकरणे च नावहितं सम्पादकेनेत्येषा त्रुटिर्ग्रन्थस्यास्य द्वितीये संस्करणेऽवश्यमेव परिमार्जिता स्यादिति संभावयति।

व्रजवल्लभद्विवेदः।

# सम्पादकीयम्

## किञ्चिन्निवेदनम्

वाराणसेयसंस्कृतविश्वविद्यालयस्य शोधप्रधाना त्रैमासिकी मुखपत्रिकेयं सारस्वती-सुषमा स्वीयान्येकविंशतिर्वर्षाणि सानन्दं व्यतीत्य स्वीये द्वाविंशतितमे वर्षे पदमाधत्त इति सूचयन् परं प्रमोदं लभे। शास्त्रीयगम्भीरशोधनिबन्धभरेयं पत्रिका संस्कृतशोधपत्रिकासु कीदृशं स्थानमावहतीति तु विद्वदग्रगण्यानां निर्णयस्य विषयः, किन्तु संस्कृतविश्वविद्यालयस्य परिवारः सर्वथा सर्वात्मनेमां प्रथमे स्थाने स्थापयितुं चेष्टत इति तु निर्विवादम्। अत्र शोधैकदृष्टीनां शास्त्रव्यसनिनां विद्वन्मूर्धन्यानां सहयोग एव कारणम्। स च सहयोगः पूर्वतन इव सदाद्यत्वेऽप्यपेक्ष्यते। भवतां विदुषां सहयोगेनैवोत्तमान् सहृदयहृदयावर्जकान् शास्त्रशाणोल्लिखितान् शोधनिबन्धान् शोधप्रणयिनां पुरत उपस्थापयितुं पारयति। अत इयं संस्कृतसमाजं साधुवादैः सत्कुर्वन्ती भवतां समेषां सौहार्दं कामयते।

## स्वर्गीयाः श्रीरामचन्द्रशास्त्रिखनङ्गमहोदयाः

वाराणसेयसंस्कृतविश्वविद्यालयस्य मीमांसाशास्त्रस्य प्राध्यापकाः सुगृहीतनामधेयाः श्रीमन्तो रामचन्द्रशास्त्रिखनङ्गमहोदयाः श्रावणशुक्लदशम्यां भौमवासरे २०२४वै० स०(१६-८-६७ दिनाङ्के) ब्रह्मात्मतामवापुरिति सूचयतामस्माकं मनो भृशं चेखिद्यते। एतेषां निधनेन काशीस्थविद्वन्मण्डलीमणिषु एकः प्रोज्ज्वलो मणिर्विसृष्टः। वाराणसेयशास्त्रार्थसभासु प्रोन्नतो भालः, सुवर्णवर्णः, व्यायामक्षुण्णगात्रता, घनगभीरघोषः कण्ठरवः, प्रौढतात्कालिककल्पनाशक्तिः, महापुरुषीयं दर्शनीयव्यक्तित्वमेतेषां हठादाकर्षयन्ति स्मान्तः शास्त्रार्थसभाभाजां विदुषामविदुषामपि तथैव।

बाल्यावस्थायामेतेषां पित्रा श्रीमहादेवशास्त्रिखनङ्गमहोदयेन सामयिकीं लौकिकीं च जनपद्धतिमनुसृत्याङ्ग्लविद्यालयेष्वध्ययनार्थमिमे प्रेषिताः, किन्तु कुलपरम्परागतसुरभारतीसमुपासनासमुज्जृम्भितलालसयेमे तत्रावस्थातुं नापारयन्। एतेषां पितामहो महान् नैयायिक आसीत्तस्य तथा विशेषतो धर्मप्राणश्रीलक्ष्मणशास्त्रिद्राविडमहाभागानां प्रेरणया न्यायशास्त्रमध्येतुं प्रवृत्ताः। पण्डितराजश्रीराजेश्वरशास्त्रिद्राविडमहोदयानां चरणेषूपित्वा न्यायशास्त्रं सम्यगधीतम्। तदनन्तरं पूर्वोत्तरमीमांसाशास्त्रेऽपि प्रागल्भ्यं समासादितम्। काशीस्थगोयनका-

संस्कृतमहाविद्यालये, ततः काशीहिन्दूविश्वविद्यालये, मीमांसाप्राध्यापकपदमलङ्कृतम्। वाराणसेयसंस्कृतविश्वविद्यालये स्थापिते प्रथमोपकुलपतयः श्रीमदादित्यनाथझामहाभागाः संस्कृतस्य विशिष्टान् विदुषांश्चिन्वन्त एतेषां गुणगणगरिम्णा समाकृष्टास्तस्मिन्नेव स्थापनवर्षे ( १९५८ ई० ) काशीहिन्दूविश्वविद्यालयात् सादरं समाहूय मीमांसाशास्त्रस्य विभागाध्यक्षपदे समस्थापयन्। अध्यापने, शास्त्रार्थविचारे, शास्त्रीये भाषणे चैतेषां कौशलं वाक्पाटवं चातीव श्लाघनीयमास्ताम्।

इमे १९६४ वैक्रमस्य कार्तिकमासे जन्मालभन्त इदानीं प्रायः षष्टितमे वर्षे प्रविशन्त आसन्। एतेषां निधनेन संस्कृतसमाज एतेषां प्रतिभाशास्त्रवैदुष्यादिभिर्वञ्चितः। विषादाकुलैरस्माभिरेतेषां कृते परिवारस्य च सान्त्वनायै भगवान् साम्बशिवः प्राथ्यते।



रजिस्टर्ड न्यूज पेपर्स एक्ट के नियम के अन्तर्गत

## विज्ञप्ति

| | |
|---|---|
| १. प्रकाशन का नाम | सारस्वती सुषमा |
| २. प्रकाशन की तिथि | त्रैमासिक |
| ३. मुद्रक का नाम | श्री घनश्याम उपाध्याय |
| राष्ट्रीयता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय-मुद्रणालय, वाराणसी। |
| ४. प्रकाशक का नाम | श्री बलदेव उपाध्याय |
| राष्ट्रीयता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी |
| ५. सम्पादक का नाम | श्री बलदेव उपाध्याय, |
| राष्ट्रीयता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी। |
| ६. स्वामित्व | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी। |

मैं श्री बलदेव उपाध्याय घोषित करता हूँ कि उपरिलिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

श्री बलदेव उपाध्याय
हस्ताक्षर

## वाराणसेयसंस्कृतविश्वविद्यालयेन वर्षेऽस्मिन् प्रकाशिता ग्रन्थाः

१—अभिधम्मत्थसंगहो—अनिरुद्धाचार्यविरचितः ।

२—भक्तिचन्द्रिका—नारायणतीर्थविरचितशाण्डिल्यभक्तिसूत्रव्याख्या - स्वप्नेश्वर-विरचितशाण्डिल्यशतसूत्रीयभाष्यसंवलिता ।

३—सूर्यग्रहणम् (शोधनिबन्धः)—डॉ० कृष्णचन्द्रद्विवेदिना विरचितम् ।

४—अथर्ववेदे शान्तिपुष्टिकर्माणि (शोधनिबन्धः)—डॉ० मायामालवीयविरचितम् ।

५—भारतस्य सांस्कृतिको दिग्विजयः—श्रीहरिदत्तवेदालङ्कारविरचितः ।

६—हयत ( सिद्धान्तज्यौतिषम् )—श्रीविभूतिभूषणभट्टाचार्येण सम्पादितम् ।

७—सिद्धान्तसार्वभौमः ( ज्यौतिषम् ) ( तृतीयो भागः )—श्रीमुनीश्वरविरचितः श्रीज्यौतिषाचार्येण मुरलीधरठक्कुरमहोदयेन सम्पादितः ।

८—न्यायकौस्तुभः ( न्यायशास्त्रम्, अनुमानखण्डम्, द्वितीयो भागः ) महादेवपुणताम्बेकरविरचितः ।

—:❀:—

प्रकाशक—संचालक अनुसंधान संस्थान, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी ।
मुद्रक—श्री घनश्याम उपाध्याय, वाराणसेय संस्कृत विश्वविद्यालय मुद्रणालय, वाराणसी ।